रागः । रसोरागस्तथारक्तिःशोभनाध्यासउच्यतइत्यभिधानं ॥५६॥ सर्वत्रानभिस्नेहत्वाच्छुभाशुभंप्राप्यना
भिनंदतिनद्वेष्टि ॥५७॥ नचैतल्लक्षणंज्ञानमयत्नतोपिभवतीत्याहोत्तरैःश्लोकैः। निराहारत्वेनविषयभोगसाम
र्थ्याभावएवभवति।इतरविषयाकांक्षाभावोवा।रसाकांक्षादिर्ननिवर्तते।सत्वपरोक्षज्ञानादेवनिवर्ततइत्याह।
विषयाइति । इंद्रियाणिजयंत्याशुनिराहारामनीषिणः । वर्जयित्वातुरसनामसौरस्येतुवर्धतइतिवचनाद्भाग
वते । रसशब्दस्यरागवाचित्वाच ॥५९॥ अपरोक्षज्ञानरहितज्ञानिनोपिसाधारणयत्नवतोपिमनोहरंतींद्रिया
णि । पुरुषस्यशरीराभिमानिनः । कोदोषस्ततः । प्रमाथीनिप्रमथनशीलानिपुरुषस्य॥६०॥तर्ह्यशक्यान्येवेत्य
तआह । तानीति । बहुयत्नवतःशक्यानि । अतोयत्नंकुर्यादित्याशयः । युक्तोमयिमनोयुक्तः । अहमेवपरःस
र्वस्मादुत्कृष्टोयस्यसमत्परः । फलमाह । वशेहीति॥६१॥रागादिदोषकारणमाहपरिहारायश्लोकद्वयेन । संमो
होकार्येच्छा । तथाहिमोहशब्दार्थउक्तउपगीतासु । मोहसंज्ञितं । अधर्मलक्षणंचैवनियतंपापकर्मस्विति । त
थाचान्यत्रसंमोहोऽधर्मकामितेति । स्मृतिविभ्रमःप्रतिषेधादिस्मृतिविनाशः । बुद्धिविनाशःसर्वात्मनादोषबु
द्धिनाशः । विनश्यतिनरकाद्यनर्थंप्राप्नोति । तथाह्युक्तं । अधर्मकामिनःशास्त्रेविस्मृतिर्जायतेयदा । दोषादृष्टे

स्तत्कृतेश्चनरकंप्रतिपद्यतइति॥६२॥६३॥ इंद्रियजयफलमाहोत्तराभ्यांश्लोकाभ्यां । विषयाननुभवन्नपि विधे यआत्मामनोयस्यसः। जितात्मेत्यर्थः। प्रसादंमनःप्रसादं॥६४॥कथंप्रसादमात्रेणसर्वदुःखहानिः। प्रसन्नचेत सोह्हिबुद्धिःपर्यवतिष्ठति ब्रह्मापरोक्ष्येणसम्यक्स्थितिंकरोति। प्रसादोनामस्वतोपिप्रायोविषयागतिः॥६५॥ प्रसादाभावेदोषमाहोत्तराभ्यांश्लोकाभ्यां। नहिप्रसादाभावेयुक्तिःचित्तनिरोधः। अयुक्तस्यचबुद्धिःसम्यग्ज्ञा नंनास्ति। तदेवोपपादयति। नचायुक्तस्येति। शांतिर्मुक्तिः। शांतिर्मोक्षोथनिर्वाणमित्यभिधानात् ॥ ६६ ॥ कथमयुक्तस्यभावनानभवति। आह। इंद्रियाणामिति। अनुविधीयतेक्रियतेनन्वीश्वरेणेंद्रियाणामनु। बुद्धि र्ज्ञानमित्यादिवक्ष्यमाणत्वात्। प्रज्ञांप्रज्ञानं। उत्पत्स्यदपिनिवारयतीत्यर्थः।उत्पन्नस्याप्यभिभवोभवति॥६७॥ तस्मात्सर्वात्मनानिगृहीतेंद्रियएवज्ञानीतिनिगमयति।तस्मादिति ॥६८॥ उक्तंलक्षणंपिंडीकृत्याह। यानिशे ति।यासर्वभूतानांनिशापरमेश्वरस्वरूपलक्षणा।यस्यांसुप्तानीवनकिंचिज्जानंति।तस्यामिंद्रियसंयमयुक्तोज्ञा नीजागर्तिसम्यगापरोक्ष्येणपश्यतिपरमात्मानमित्यर्थः।यस्यांविषयलक्षणायांभूतानिजाग्रतितस्यांनिशाया मिवसुप्तःप्रायोनजानाति।मत्तादिवद्गमनादिप्रवृत्तिः।तदुक्तं।देहंतुतन्नचरमं देहोपिदैववशगइतिश्लोकाभ्यां।

मननयुक्तोमुनिः। पश्यतइत्यस्यसाधनमाह॥६९॥तेनविषयानुभवप्रकारमाह। आपूर्यमाणमिति। योविष
यैरापूर्यमाणोप्यचलप्रतिष्ठोभवतिनोत्सेकंप्राप्नोतिनचप्रयत्नंकरोतिनचाभावेशुष्यति। नहिसमुद्रःसरित्प्रवे
शाप्रवेशनिमित्तवृद्धिशोषौबहुतरौप्राप्नोतिप्रयत्नंवाकरोति। समुक्तिंप्राप्नोतीत्यर्थः॥७०॥एतदेवप्रपंचयति।
विहायेति। कामान्विषयान्निस्पृहतयाविहाययश्चरतिभक्षयति। भक्षयामीत्यहंकारममकारवर्जितश्चस
हिपुमान्सएवचमुक्तिमधिगच्छतीत्यर्थः॥७१॥उपसंहरति। एषेति। ब्राह्मीस्थितिःब्रह्मविषयास्थितिर्लक्षणं।
अंतकालेप्यस्यांस्थित्वैवब्रह्मगच्छति। अन्यथाजन्मांतरंप्राप्नोति। यंयंवापीतिवक्ष्यमाणत्वात्। ज्ञानिनामपि
सतिप्रारब्धकर्मणिशरीरांतरंयुक्तं। भोगेनत्वितरइतिह्युक्तं। संतिहिबहुशरीरफलानिकर्माणिकानिचित्।
सप्तजन्मनिविप्रःस्यादित्यादेः। दृष्टेश्चज्ञानिनामपिबहुशरीरप्राप्तेः। तथाह्युक्तं।स्थितप्रज्ञोपियस्तूर्ध्वःप्राप्यरौद्रं
पदंततः। सांकर्षणंततोमुक्तिमगाद्विष्णुप्रसादतइतिगारुडे। महादेवपरेजन्मंस्तवमुक्तिर्निरूप्यतइतिनार
दीये। निश्चितफलंचज्ञानं। तस्यतावदेवचिरं यदुचनार्चिषमेवाभिसंभवतीत्यादिश्रुतिभ्यः। नचकायव्यूहा
पेक्षा। तद्यथेषीकतूलं तद्यथापुष्करपलाशे ज्ञानाग्निःसर्वकर्माणीत्यादिवचनेभ्यः। प्रारब्धेत्वविरोधः। प्रमा

णाभावाच्च। नचतच्छास्त्रंप्रमाणं। अक्षपादकणादानांसांख्ययोगजटाभृतां। मतमालंब्ययेवेदंदूषयंत्यल्पचे
तसइतिनिंदनात्। यत्रतुस्तुतिःतत्रशिवभक्तानांस्तुतिपरत्वमेवनसत्यत्वं। नहितेषामपीतरग्रंथविरुद्धार्थेप्रा
माण्यं। तथाह्युक्तं। एषमोहंसृजाम्याशुयोजनान्मोहयिष्यति। त्वंचरुद्रमहाबाहोमोहशास्त्राणिकारय। अ
तथ्यानिवितथ्यानिदर्शयस्वमहाभुज। प्रकाशंकुरुचात्मानमप्रकाशंचमांकुर्वितिवाराहे। कुत्सितानिचमिश्रा
णिरुद्रोविष्णुप्रचोदितः। चकारशास्त्राणिविभुर्ऋषयस्तत्प्रचोदिताः। दधीच्याद्याःपुराणानितच्छास्त्रसमयेन
तु। चक्रुर्वेदैश्चब्राह्माणिवैष्णवान्विष्णुवेदतः। पंचरात्रंभारतंचमूलरामायणंतथा। तथापुराणंभागवतंवि
ष्णुवेदइतीरितः। अतःशैवपुराणानियोज्यान्यन्याविरोधतइतिनारदीये। अतोज्ञानिनांभवत्येवमुक्तिः।
भीष्मादीनांतुतत्क्षणेयुक्त्यभावः। स्मरंस्त्यजतीतिवर्तमानापदेशोहिकृतः। तच्चोक्तं। ज्ञानिनांकर्मयुक्तानां
कायत्यागक्षणेयदा। विष्णुमायातदातेषांमनोबाह्यंकरोतिहीतिगारुडे। नचान्येषांतदास्मृतिर्भवति। बहु
जन्मविपाकेनभक्तिज्ञानेनयेहरिं। भजंतितत्स्मृतिंत्वंतदेवोयातिनचान्यथेत्युक्तेर्ब्रह्मवैवर्ते। निर्वाणमशरीरं।
कायोबाणंशरीरंचेत्यभिधानात्। एतद्बाणमवष्टभ्येतिप्रयोगाच्च। निर्वाणशब्दप्रतिपादनमनिंद्रियाइत्यादि

वत् । कथमन्यथासर्वपुराणादिप्रसिद्धाऽकृतिर्भगवतउपपद्यते । नचान्यद्भगवतउत्तमंब्रह्म।ब्रह्मेतिपरमात्मेति भगवानितिशब्द्यतइतिभागवते । भगवंतंपरंब्रह्मपरंब्रह्मजनार्दनः । परमंयोमहद्ब्रह्म । यस्मात्क्षरमतीतोह मक्षरादपिचोत्तमः । योसावतींद्रियग्राह्यः । नास्तिनारायणसमंनभूतंनभविष्यति । नत्वत्समोस्त्यभ्यधिकः कुतोन्यइत्यादिभ्यः । नचतस्यब्रह्मणोशरीरत्वादेतत्कल्प्यं । तस्यापिशरीरश्रवणात् । आनंदरूपममृतं । सुवर्णज्योतिः। दहरोस्मिन्नंतरआकाशइत्यादिषु।यदिरूपंनस्यात् । आनंदमित्येवस्यात् । नत्वानंदरूपमिति। कथंचसुवर्णरूपत्वंस्यादरूपस्यकथंदहरत्वं । दहरस्थश्च केचित्स्वदेहेत्यादौरूपवानुच्यते । सहस्रशीर्षापुरुषः। रुग्मवर्णंकर्तारं । आदित्यवर्णंतमसःपरस्तात् । सर्वतःपाणिपादंतत् । विश्वतश्चक्षुरित्यादिवचनात् । विश्वरूपाध्यायादेश्चरूपवानवसीयते । अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानंदश्रीशक्त्यादिमांश्चभगवान् । परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाच । यःसर्वज्ञः । आनंदंब्रह्मणः । एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति । अनादिमध्यांतमनंतवीर्यं । सहस्रलक्षामितकांतिकांतं । मय्यनंतगुणेऽनंतेगुणतोनंतविग्रहे । विज्ञानशक्तिरहमासमनंतशक्तेः । तुर्यंतत्सर्वदृक्सदा । आत्मानमन्यंचसवेदविद्वान् । अन्यतमोमु

कुंदात्कोनामलोकेभगवत्पदार्थः। ऐश्वर्यस्यसमग्रस्य। अतीवपरिपूर्णंतेसुखंज्ञानंचसौभगं । यच्चात्ययुक्तंस्म तुंवाशक्तःकर्तुमतःपरइत्यादिभ्यः। तानिसर्वाण्यन्योन्यस्वरूपाणि। विज्ञानमानंदंब्रह्म । आनंदोब्रह्मेतिव्य जानात्। सत्यंज्ञानमनंतंब्रह्म। यस्यज्ञानमयंतपः। समाभगप्रविशस्वाहा । नतस्यप्राकृतामूर्तिर्मांसमेदोस्थि संभवा। नयोगित्वादीश्वरत्वात्सत्यरूपाच्युतोविभुः। सद्देहःसुखगंधश्चज्ञानभाःसत्पराक्रमः। ज्ञानज्ञानःसु खसुखःसविष्णुःपरमोक्षरइतिपैंगिखिलेषु। देहोयंमेसदानंदोनायंप्रकृतिनिर्मितः। परिपूर्णश्चसर्वत्रतेननना रायणोस्म्यहमित्यादिब्रह्मवैवर्ते। तदेवलीलयाचासौपरिच्छिन्नादिरूपेणदर्शयतिमायया । नचगर्भेवसद्दे व्यानचापिवसुदेवतः। नचापिराघवाज्जातोनचापिजमदग्नितः। नित्यानंदोऽद्वयोप्येवंक्रीडतेऽमोघदर्शनइ तिपाद्मे। नवैसआत्माऽऽत्मवतामधीश्वरोभुंक्तेहिदुःखंभगवान्वासुदेवः। सर्गादेरीशिताजःपरमसुखनिधिर्बो धरूपोप्यबोधंलोकानांदर्शयन्योमुनिसुतहृतात्मप्रियार्थेजगाम। सब्रह्मवंद्यचरणोनरवत्प्रलापीस्त्रीसंगिना मितिरतिंप्रथयंश्चचार । पूर्तेरचिंत्यवीर्योयोयश्चदाशरथिःस्वयं।रुद्रवाक्यमृतंकर्तुमजितोजितवत्स्थितः। योऽजितोविजितोभक्त्यागांगेयंनजघानह।नचांबांग्राहयामासकरुणःकोपरस्ततइत्यादिभ्यश्चस्कांदे।नतत्र

संसारधर्मानिरूप्याः। यत्रचपरावरभेदोवगम्यते। तत्राज्ञबुद्धिमपेक्ष्यावरत्वं। विश्वरूपमपेक्ष्यान्यत्र। तच्चो
क्तं। परिपूर्णानिरूपाणिसमान्यखिलरूपतः। तथाप्यपेक्ष्यमंदानांदृष्टिंत्वास्पृषयोपितु। परावरंवदंत्येवंह्यभ
क्तानांविमोहनमितिगारुडे। नचात्रकिंचिदुपचरितादिवाच्यं। अचिंत्यशक्तेः। पदार्थवैचित्र्याच्चेत्युक्तं। कृ
ष्णरामादिरूपाणिपरिपूर्णानिसर्वदा। नचाणुमात्रंभिन्नानितथाप्यस्मान्विमोहसीत्यादेश्चनारदीये। तस्मा
त्सर्वदासर्वरूपेष्वपरिगणितानंतगुणगणंनित्यनिरस्ताशेषदोषंचनारायणाख्यंपरंब्रह्मापरोक्षज्ञान्यृच्छतीति
सिद्धं ॥ ७२ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्गीताभाष्येद्वितीयोऽध्यायः ॥ २ ॥
ॐ ॥ आत्मस्वरूपंज्ञानसाधनंचोक्तंपूर्वत्र।ज्ञानसाधनत्वेनाकर्मविनिंद्यकर्मविधीयतउत्तराध्याये। कर्मणोज्ञा
नमत्युत्तममित्यभिहितंभगवतादूरेणह्यवरंकर्मेत्यादौ। एवंचेत्किमितिकर्मणिघोरेयुद्धाख्येनियोजयसिनिवृ
त्तधर्मान्विनेत्याह। ज्यायसीति। कर्मणःसकाशाद्बुद्धिर्ज्यायसीचेत्तेतवमतातत्तर्हि॥१॥ज्यायस्त्वेपिबुद्धेरा
धिकारिकत्वात्त्वंकर्मण्यप्यधिकृतइतितत्रनियोक्ष्यामीत्याशयवान्भगवानाह। लोकइति। द्विविधाअपिज ॥ ४४ ॥
नाःसंति। गृहस्थादिकर्मत्यागेनज्ञाननिष्ठाःसनकादिवत्। तत्स्थाएवज्ञाननिष्ठाश्चजनकादिवत्। मद्धर्मस्था

एवेत्यर्थः । सांख्यानांज्ञानिनांसनकादीनां । योगिनामुपायिनांजनकादीनां ।ज्ञाननिष्ठाअप्याधिकारिकत्वा
दीश्वरेच्छयालोकसंग्रहार्थत्वाच्चयेकर्मयोग्याभवंतितेपियोगिनः । निष्ठास्थितिः । त्वंतुजनकादिवत्सकर्मैव
ज्ञानयोग्योनतुसनकादिवत्तत्त्यागेनेत्यर्थः । संतिहीश्वरेच्छयैवकर्मकृतःप्रियव्रतादयोपिज्ञानिनएव । तथा
ह्युक्तं । ईश्वरेच्छयाविनिवेशितकर्माधिकारइति ॥३॥ इतश्चनियोक्ष्यामीत्याह । नकर्मणामिति । कर्मणांयु
द्धादीनामनारंभेणनैष्कर्म्यंनिष्कर्मतांकाम्यकर्मपरित्यागेनप्राप्यतइतिमोक्षंनाश्नुते । ज्ञानमेवतत्साधनंनतु
कर्माकरणमित्यर्थः । कुतः । पुरुषत्वात् । सर्वदास्थूलेनसूक्ष्मेणवापुरेणयुक्तोननुजीवः । यदिकर्माकरणेनमु
क्तिःस्यात्स्थावराणां । नचाकरणेकर्माभावान्मुक्तिर्भवति । प्रतिजन्मकृतानामनंतकर्मणांभावात् । नचसर्वा
णिकर्माणिभुक्तानि । एकस्मिन्शरीरेबहूनिहिकर्माणिकरोति।तानिचैकैकानिबहुजन्मफलानिकानिचित् ।
तत्रचैकैकानिकर्माणिभुंजन्प्राप्नोत्येवशेषेणमानुष्यं । ततश्चबहुशरीरफलानिकर्माणीत्यसमाप्तिः । तच्चोक्तं ।
जीवंश्चतुर्दशादूर्ध्वंपुरुषोनियमेनतु । स्त्रीवाप्यनूनदशकंदेहंमानुषमार्जते ।चतुर्दशोर्ध्वजीवीनिसंसारश्चादि
वर्जितः । अतोऽवित्त्वापरंदेवंमोक्षाशाकामहामुनइतिब्राह्मे । यदिसादिःस्यात्संसारःपूर्वकर्माभावादतत्प्रा

स्तिः। अबंधकत्वंत्वकामेनैवभवति। तच्चवक्ष्यते । अनिष्टमिष्टमिति । ननुनिष्कामकर्मणःफलाभावान्मोक्षः स्मृतः। निष्कामंज्ञानपूर्वंतुनिवृत्तमिहचोच्यते। निवृत्तंसेवमानस्तुब्रह्माभ्येतिसनातनमितिमानवे। अतस्त त्साम्यादकरणेपिभवतीत्यतआह। नचेति। संन्यासःकाम्यकर्मपरित्यागः। काम्यानांकर्मणामितिवक्ष्यमा णत्वात्। अकामकर्मणामंतःकरणशुद्धिद्वाराज्ञानान्मोक्षोभवति। तच्चोक्तं। कर्मभिःशुद्धसत्त्वस्यवैराग्यंजा यतेहृदीतिभागवते। विरक्तानामेवचज्ञानमित्युक्तं। नतस्यतत्त्वग्रहणायसाक्षाद्वरीयसीरपिवाचःसमासन्। स्वप्नेनिरुक्त्यागृहमेधिसौख्यंनयस्यहेयानुमितंस्वयंस्यादिति। नतुफलाभावात्। कर्माभावात्। अतोनकर्म त्यागएवमोक्षसाधनं। यत्याश्रमस्तुप्रायत्यार्थोभगवत्तोषणार्थश्च।अप्रयतत्वमेवहिप्रायोगृहस्थादीनां। इत रकर्मोद्योगात्। अप्रयतानांचनज्ञानं। तथाहिश्रुतिः। नाशांतोनासमाहितइति । महांश्चयत्याश्रमेतोषोभ गवतः। तथाह्याह। यत्याश्रमंतुरीयंतुदीक्षांममसुतोषिणीमितिनारायणाष्टाक्षरकल्पे। आधिकारिकास्तुत त्स्थाएवप्रायत्येसमर्थाः। सएवचमहान्भगवत्तोषः। तच्चोक्तं। देवादीनामादिराज्ञांमहोद्योगेपिनोमनः। वि ष्णोश्चलतितद्धोगोप्यतीवहरितोषणमितिपाद्मे ॥ ४ ॥ नतुकर्माणिसर्वात्मनात्यक्तुंशक्यानीत्याह। नहीति

॥५॥ तथापिशक्तितस्त्यागःकार्यइत्याह । कर्मेंद्रियाणीति । मनएवप्रयोजकमितिदर्शयितुमन्वयव्यतिरेका
वाह । मनसास्मरन्मनसानियम्येति । कर्मयोगंस्ववर्णाश्रमोचितं । नतुगृहस्थकर्मैवेतिनियमः । संन्यासादि
विधानात् । सामान्यवचनाच्च ॥ ६ ॥ ७ ॥ अतोनियतंस्ववर्णाश्रमोचितंकर्मकुरु ॥८॥ कर्मणाबध्यतेजंतुरि
तिकर्मबंधकंस्मृतमित्यतआह । यज्ञार्थादिति । कर्मबंधनंयस्यलोकस्यसकर्मबंधनः । यज्ञोविष्णुः । यज्ञार्थंसं
गरहितंकर्मनबंधकमित्यर्थः । मुक्तसंगइतिविशेषणात् । कामान्यःकामयतइतिश्रुतेश्च । अनिष्टमिष्टमितिव
क्ष्यमाणत्वाच्च । एतान्यपितुकर्माणीतिच । तस्मान्नेष्टियाजुकःस्यादितिच । विशेषवचनत्वेसमेपिविशेषणंप
रिशिष्यते ॥ ९ ॥ अत्रार्थवादमाह । सहयज्ञाइति ॥१०-१३॥ हेत्वंतरमाह । अन्नादिति । यज्ञःपर्जन्यान्नत्वा
त्तत्कारणमुच्यते । पूर्वयज्ञविवक्षायांतस्यचक्रप्रवेशोनभवति । तद्व्याप्याद्यंकर्मविधये । नतुसाम्यमात्रेणेदा
नींकार्यं । मेघचक्राभिमानीचपर्जन्यः । तच्चयज्ञाद्भवति । अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठति । आदि
त्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइतिस्मृतेः । उभयवचनादादित्यात्समुद्राच्चाविरोधः । अतश्चयज्ञात्पर्जन्योद्भ
वःसंभवति । यज्ञोदेवतामुद्दिश्यद्रव्यत्यागः । कर्मेतरक्रिया ॥१४॥ कर्मब्रह्मणोजायते । एषह्येवसाधुकर्मकार

यति। बुद्धिर्ज्ञानमित्यादिभ्यः। नचमुख्येसंभाव्यमानेपारंपर्येणौपचारिकंकल्प्यं । नचजडानांस्वतःप्रवृत्तिः संभवति। एतस्यवाअक्षरस्येत्यादिसर्वनियमनश्रुतेश्च। द्रव्यंकर्मचकालश्चेत्यादेश्च। अचिंत्यशक्तिश्चोक्ता। जीवस्यचप्रतिबिंबस्यबिंबपूर्वैवचेष्टा। नकर्तृत्वमित्यादिनिषेधाच्च । अक्षराणिप्रसिद्धानितेभ्योभिव्यज्यतेप रंब्रह्म। अन्यथाअनादिनिधनमचिंत्यंपरिपूर्णमपिब्रह्मकोजानाति। नचरूढिंविनायोगांगीकारोयुक्तः। प रामर्शाच्चतस्मात्सर्वगतंब्रह्मेति। नह्येकशब्देनद्विरुक्तेनभेदश्रुतिंविनावस्तुद्वयंकुत्रचिदुच्यते। तानिचाक्ष राणिनित्यानि । वाचाविरूपनित्यया। अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवा । अतएवचनित्य- त्वमित्यादिश्रुतिस्मृतिभगवद्वचनेभ्यः । दोषश्चोक्तःसकर्तृकत्वे । नचाबुद्धिपूर्वमुत्पन्नानि । तत्प्रमा- णाभावात् । निश्वसितशब्दस्त्वक्लेशाभिप्रायोनाबुद्धिपूर्वाभिप्रायः । सोकामयतेत्यादेश्च । इष्टंहुत- मित्यादिरूपप्रपंचेनसहाभिधानाच्च । महातात्पर्यविरोधाच्च । तच्चोक्तंपुरस्तात् । नह्यस्वातंत्र्येणोत्प त्तिकर्तुःप्राधान्यं। अस्वातंत्र्यंचतदमतिपूर्वकत्वेनभवति। यथारोगादीनांपुरुषस्यतज्जत्वेपि। उत्पत्तिवच नान्यभिव्यक्त्यर्थान्यभिमानिदेवताविषयाणिच। नित्येत्युक्त्वोत्सृष्टेतिवचनात् । अभिव्यंजकेकर्तृवचनंचा

स्ति। कृत्स्नंशतपथंचक्रइति। कथमादित्यस्थावेदास्तेनैवक्रियंते। वचनमात्राच्चनिर्णयात्मकशारीरोक्तिबल वत्। शास्त्रंयोनिर्यस्येतितुशास्त्रयोनित्वं। जन्माद्यस्येत्युक्तेप्रमाणंहितत्रापेक्षितं। नतुतस्यजातत्ववेदकार णत्वंवा। नहिवेदकारणत्वंजगत्कारणत्वेहेतुः। नहिविचित्रजगत्सृष्टेर्वेदसृष्टिरशक्यासृज्यत्वे। नचसर्वज्ञत्वे यदिवेदस्रष्टासर्वज्ञः किमितिनजगत्स्रष्टा। तस्माद्वेदप्रमाणकत्वमेवात्रविवक्षितं। अतोनित्यान्यक्षराणि। य तएवंपरंपरयायज्ञाभिव्यंग्यंब्रह्मतस्मात्तन्नित्यंयज्ञेप्रतिष्ठितं।तानिचाक्षराणिभूताभिव्यंग्यानीतिचक्रं ॥१५॥ तदेतज्जगच्चक्रंयोनानुवर्तयतिसतद्विनाशकत्वादघायुः। पापनिमित्तमेवयस्यायुःसोघायुः ॥१६॥ तर्ह्यतीव मनःसमाधानमपिनकार्यमित्यतआह। यस्त्विति। रमणंपरदर्शनादिनिमित्तंसुखं। तृप्तिरन्यत्रालंबुद्धिः। संतोषस्तज्जनकंसुखं। संतोषस्तृप्तिकारणमित्यभिधानात्। परमात्मदर्शनादिनिमित्तंसुखंप्राप्तः। अन्यत्रसर्वा त्मनालंबुद्धिः। महच्चतत्सुखं। तेनैवान्यत्रालंबुद्धिरितिदर्शयति। आत्मन्येवचसंतुष्टइति। तत्स्थएवसन्सं तुष्टइत्यर्थः। नान्यत्किमपिसंतोषकारणमित्यवधारणं। आत्मनातृप्तः। नह्यात्मन्यलंबुद्धिर्युक्ता। तद्वाचि त्वंच वयंतुनवितृप्यामउत्तमश्लोकविक्रमैरितिप्रयोगात्सिद्धं। अध्याहारस्त्वगतिकागतिः। आत्मरतिरे

वेत्यवधारणादसंप्रज्ञातसमाधिस्थस्यैवकार्यंनविद्यते । स्थितप्रज्ञस्यापिकार्योदेहादिर्दृश्यतेयदा । स्वधर्मो ममतुष्ट्यर्थःसाहिसर्वैरपेक्षितेतिवचनाच्चपंचरात्रे । अन्यदाऽन्यरतिरपीषत्सर्वस्य भवति । नचतत्रालंबुद्धि मात्रमुक्तं । आत्मतृप्तइतिपृथगभिधानात् । कर्तृशब्दःकालावच्छेदेपिचायंप्रसिद्धः । योभुंक्तेसतुनब्रूयादि त्यादौ । अतोसंप्रज्ञातसमाधावेवैतत् । मानवइतिज्ञानिनएवासंप्रज्ञातसमाधिर्भवतीतिदर्शयति । मनुअव बोधनइतिधातोः । परमात्मरतिश्चात्रविवक्षिता । विष्णावेवरतिर्यस्यक्रियातस्यैवनास्तिहीतिवचनात् ॥१७॥तस्यकर्मकालेवक्तव्योहमितिकंचित्प्रत्युक्त्वातत्कृतावात्मरत्यधिकःसमोवाऽर्थोनास्ति । नचसंध्या द्यकृतौकश्चिद्दोषोस्ति । नचैतदपहायसर्वभूतेषुकश्चित्प्रयोजनाश्रयः । अर्थोयेनदर्शनादिनाभवतिसोर्थ व्यपाश्रयः । ज्ञानमात्रेणप्रत्यवायोयद्यपिनभवति । तदर्जुनस्यापिसममितिनतस्यकर्मोपदेशयोग्येतद्भव ति । ईषत्प्रारब्धानर्थसूचकंचतद्भवति । महच्चेद्ब्रह्महत्यादिवत् ॥ १८ ॥ यतोसंप्रज्ञातसमाधेरेवकार्याभावःत स्मात्कर्मसमाचर ॥१९॥ आचारोप्यस्तीत्याह । कर्मणैवेति । कर्मणासहकर्मकुर्वंतएवेत्यर्थः । कर्मकृत्वैवत तोज्ञानंप्राप्येतिवा । नतुज्ञानंविना । प्रसिद्धंहितेषांज्ञानित्वंभारतादिषु । तमेवंविद्वानमृतइहभवतीत्यादि

श्रुतिभ्यश्च । अत्रापिकर्मणांज्ञानसाधनत्वोक्तेश्चबुद्धियुक्ताइति । गत्यंतरंचनान्यःपंथाइत्यस्यनास्ति । इतरेषांज्ञानद्वाराप्यविरोधः । यत्रचतीर्थाद्येवमुक्तिसाधनमुच्यते । ब्रह्मज्ञानेनवामुक्तिःप्रयागमरणेनवा । अथवास्नानमात्रेणगोमत्यांकृष्णसन्निधावित्यादौ । तत्रपापादिमुक्तिः स्तुतिपरताच । तत्रापिहिकुत्रचिद्ब्रह्मज्ञानसाधनत्वमेवोच्यते । अन्यथामुक्तिंनिषिध्य ब्रह्मज्ञानंविनामुक्तिर्नकथंचिदपीष्यते । प्रयागादेस्तुयामुक्तिर्ज्ञानोपायत्वमेवहीत्यादौ । नचतीर्थस्तुतिवाक्यानितत्प्रस्तावेप्युक्तंज्ञाननियमंघ्नंति । यथाकंचिद्दक्षंभृत्यंप्रत्युक्तान्ययमेवहिराजाकिंराज्ञेत्यादीनि । यथाहभगवान् । यानितीर्थादिवाक्यानिकर्मादिविषयाणिच । स्तावकान्येवतानिस्युरज्ञानांमोहकानिवा । भवेन्मोक्षस्तुमद्दृष्टेर्नान्यतस्तुकथंचनेतिनारदीये । अतोपरोक्षज्ञानादेवमोक्षः कर्मतुतत्साधनमेव ॥२०॥ सयद्वाक्यादिकंप्रमाणंकुरुते । यदुक्तप्रकारेणतिष्ठतीत्यर्थः ॥२१॥ विद्वदविदुषोःकर्मभेदमाह । प्रकृतेरिति । प्रकृतेर्गुणैरिंद्रियादिभिः । प्रकृतिमपेक्ष्यगुणभूतानिहितानि । तत्संबंधीनिच । नहिप्रतिबिंबस्यक्रिया ॥२७॥ कर्मभेदस्यगुणभेदस्यचतत्त्ववित् । गुणाइंद्रियादीनि । गुणेषुविषयेषु ॥२८॥ प्रकृतेर्गुणेषुइंद्रियादिषुसंमूढाः । इंद्रियाद्यभिमानाद्धिविषयादिसंगः । गुणकर्मसुविषयेषुकर्मसुच ।

शब्दाद्याइंद्रियाद्याश्चसत्त्वाद्याश्चशुभानिच।अप्रधानानिचगुणानिगद्यंतेनिरुक्तिगैरित्यभिधानात्।सत्त्वाद्यं
गीकारेगुणागुणेष्वित्ययुक्तंस्यात् ॥२९॥ अतःसर्वाणिकर्माणिमय्येवसंन्यस्यभ्रांत्याजीवेऽध्यारोपितानिमय्ये
वविसृज्यभगवानेवसर्वाणिकर्माणिकरोतीति मत्पूजेतिच। आत्मानंमामधिकृत्ययच्चेतस्तदध्यात्मचेतः। सं
न्यासस्तुभगवान्करोतीति। निर्ममत्वंनाहंकरोमीति ॥३०॥ फलमाह।येमइति। येत्वेवंनिवृत्तकर्मिणस्तेपि
मुच्यंतेज्ञानद्वारा किम्वपरोक्षज्ञानिनः।नतुसाधनांतरमुच्यते। निवृत्तादीनिकर्माणिह्यपरोक्षेशदृष्टये। अप
रोक्षेशदृष्टिस्तुमुक्तौकिंचिन्नमार्गते। सर्वंतदंतराधायमुक्तयेसाधनंभवेत् । नार्किंचिदंतराधायनिर्वाणायाप
रोक्षदृगितिह्युक्तंनारायणाष्टाक्षरकल्पे। अतएवसमुच्चयनियमोनिराकृतः ॥३१।३२॥ एवंचेत्किमितितेमतं
नानुतिष्ठंतिलोकाइत्यतआह। सदृशमिति। प्रकृतिःपूर्वसंस्कारः ॥३३॥ तथापिशक्तितोनिग्रहःकार्यः। नि
ग्रहात्सद्यःप्रयोजनाभावेपिभवत्येवातिप्रयत्नतइत्याशयवानाह । इंद्रियस्येति।तथाह्युक्तं संस्कारोबलवानेव
ब्रह्माद्याअपितद्वशाः। तथापिसोन्यथाकर्तुंशक्यतेतिप्रयत्नतइति ॥ ३४ ॥ तथाप्युग्रंयुद्धंकर्मेत्यतआह ।
श्रेयानिति ॥ ३५ ॥ बहवःकर्मकारणाःसंति। क्रोधादयःकामश्च । तत्रकोबलवानितिपृच्छति । अथे

त्ति । अथेत्यर्थांतरं । तयोर्नवशमागच्छेदितिप्रश्नप्रापकं ॥ ३६ ॥ यस्तुबलवान्प्रवर्तकःसएषकामःक्रोधो प्येषएव । तज्जन्यत्वात् । कामात्क्रोधोभिजायतइतिह्युक्तं । यत्रापिगुरुर्निंदादिनिमित्तःक्रोधःतत्रापिभक्ति निमित्तानिंदाकामनिमित्तएव । येत्वन्यथावदंतितेसंकरान्नसूक्ष्मंजानंति । उक्तंच । ऋतेकामंनकोपाद्याजा यंतेहिकथंचनेति । महाशनः महद्भिकामभोग्यं । महाब्रह्महत्यादिकारणत्वान्महापाप्मा । सर्वपुरुषार्थविरो धित्वाद्वैरी ॥ ३७ ॥ कथंविरोधीसः । इदमनेनावृतं । यथाधूमेनाग्निरावृतःप्रकाशरूपोप्यन्येषांसम्यगदर्शना यतथापरमात्मा । यथाऽऽदर्शोमलेनावृतोन्याभिव्यक्तिहेतुर्नभवतितथांतःकरणंपरमात्मादेर्व्यक्तिहेतुर्नभ वति । कामेनावृतं । यथोल्बेनावृत्यबद्धोभवतिगर्भः तथाकामेनावृतोजीवः ॥ ३८ ॥ शास्त्रतोजातमपिज्ञानं परमात्मापरोक्ष्यायनप्रकाशतेकामेनावृतंज्ञानिनोपि किम्वल्पज्ञानिनः।कामरूपेणकामाख्येननित्यवैरिणा। दुष्पूरेण दुःखेनहिकामःपूर्यते । नहींद्रादिपदंसुखेनलभ्यते । यद्यपींद्रादिपदंप्राप्तःपुनर्ब्रह्मादिपदमिच्छती त्यलंबुद्धिर्नास्तीत्यनलः । उक्तंच । ज्ञानस्यब्रह्मणश्चाग्नेर्धूमोबुद्धेर्मलंतथा।आदर्शस्याथजीवस्यगर्भस्योल्बोहि कामकइति ॥ ३९ ॥ वधार्थंशत्रोरधिष्ठानमाह । इंद्रियाणीति । एतैर्ज्ञानमावृत्यबुद्ध्यादिभिर्हिविषयगैर्ज्ञानमा

वृतंभवति ॥४०॥ हताधिष्ठानोहिशत्रुर्नश्यति ॥४१॥ शत्रुहननआयुधरूपंज्ञानंवक्तुंज्ञेयमाह। इंद्रियाणीति। असंगज्ञानासिमादायतरातिपारमितिह्युक्तं। शरीरादिंद्रियाणिपराणिउत्कृष्टानि।नकेवलंबुद्धेःपरःश्रुत्युक्त प्रकारेणाव्यक्तादपि। अव्यक्तात्पुरुषःपरइतिश्रुतिः। नचतत्रतत्रोक्तैकदेशज्ञानमात्रेणभवतिमुक्तिः। सार्व त्रिकगुणोपसंहारोहिभगवतागुणोपसंहारपादेऽभिहितः आनंदादयःप्रधानस्येत्यादिना। तथाचान्यत्र। अपौरुषेयवेदेषुविष्णुवेदेषुचैवहि। सर्वत्रयेगुणाःप्रोक्ताःसंप्रदायागताश्चये। सर्वैस्तैःसहविज्ञाययेपश्यंतिपरं हरिं। तेषामेवभवेन्मुक्तिर्नान्यथातुकथंचनेतिगारुडे। तस्मादव्यक्तादपिपरत्वेनज्ञेयः। नचात्रजीवउच्यते। रसोप्यस्यपरंदृष्ट्वानिवर्ततइत्युक्तत्वात्। अविज्ञायपरंमत्तोजयःकामस्यवैकुतइतिच। अतःपरमात्मज्ञानमे-वात्रविवक्षितं। आत्मानंमनःआत्मनाबुद्ध्या॥ ४२॥ ४३॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्येतृतीयोऽध्यायः॥ ३॥ ॥ ॥ ॥ ॥

ॐ॥ बुद्धेःपरस्यमाहात्म्यंकर्मभेदोज्ञानमाहात्म्यंचोच्यतेस्मिन्नध्याये॥ध्या॥ पूर्वानुष्ठितश्चायंधर्मइत्याह। इम मिति ॥१॥ मयिसर्वाणीत्युक्तंतन्माहात्म्यमादितोज्ञातुंपृच्छति। अपरमिति ॥४॥ नैतद्दर्शनादिर्भवानित्यत

आह। अजोपीति। अव्ययआत्मादेहोपीत्यव्ययात्मा। अनंतंविश्वतोमुखमितिरूपविशेषणमुत्तरत्र। एतन्ना
नावताराणांनिधानंबीजमव्ययमितिच।जगृहइतितुव्यक्तिः। युक्तयस्तूक्ताः। आत्मानादित्वंतुसर्वसमं।कथ
मनादिनित्यस्यजनिः।प्रकृतिंस्वामधिष्ठाय। प्रकृत्याजातेषुवसुदेवादिषु। तयैवतेषांजातइवप्रतीयतइत्यर्थः।
नतुस्वतंत्रामधिष्ठायेत्याह। स्वामिति। द्रव्यंकर्मचेतिह्युक्तं। साहितत्रोक्ता। ततःसर्वसृष्टेः। आत्ममायया।आ
त्मज्ञानेन। प्रकृतेःपृथगभिधानात्। केतुःकेतश्चितिश्चित्तंमतिःक्रतुर्मनीषामायेत्यभिधानं। सृष्टिकारणयाते
षांशरीरादिसृष्टाविमोहिकयाऽजातएवजातइवप्रतीयतेवा। उक्तंच। महदादेस्तुमातायाश्रीर्भूमिरितिक
ल्पिता। विमोहिकाचदुर्गाख्याताभिर्विष्णुरजोपिहि। जातवत्प्रथतेह्यात्मचिह्वलान्मूढचेतसामिति। ईश्वर
ईशेभ्योपिवरः। तच्चोक्तं। ईशेभ्योब्रह्मरुद्रश्रीशेषादिभ्योयतोभवान्। वरोतईश्वराख्यातेमुख्यानान्यस्यक
स्यचिदितिब्रह्मवैवर्ते। समर्थईशइत्युक्तस्तद्वरत्वात्त्वमीश्वरइतिच॥६॥ नजन्मनैवपरित्राणादिकंकार्यमिति
नियमः। तथापिलीलयास्वभावेनचयथेष्टचारी।तथाह्युक्तं। देवस्यैषस्वभावोयं।लोकवत्तुलीलाकैवल्यं। क्रीड
तोबालकस्येवचेष्टांतस्यनिशामय। अरिभयादिवस्वयंपुराद्ध्यवात्सीद्यदनंतवीर्यः। पूर्णोयमस्यात्रनकिंचि

दाप्यंतथापिसर्वाःकुरुतेप्रवृत्तीः। अतोविरुद्धेषुमिमंवदंतिपरावरज्ञामुनयःप्रशांताइत्याद्यृग्वेदखिलेषु ॥८॥
पृथङ्मुक्त्युक्तिःसर्वज्ञाननियमदर्शनार्थं । नतुतावन्मात्रेणमुक्तिरित्युक्तं । वेदाद्युक्तंतुसर्वंयोज्ञात्वोपास्ते
सदाहिमां । तस्यैवदर्शनपथंयामिनान्यस्यकस्यचिदित्युक्तेश्चमहाकौर्मे । अत्रोक्तस्यैतज्ज्ञात्वैवजन्मनैती
तिगतिः। इतरवाक्यानांनान्यागतिः। नान्यस्यकस्यचिदितिविशेषणात्। तत्त्वतइतिविशेषणाच्चसर्वज्ञान
मापतति । यत्रैवंभवतितत्रतत्त्वतइतिविशेषणेनविरोधः। उक्तंच । एकंचतत्त्वतोज्ञातुंविनासर्वज्ञतांनरः।
नसमर्थामेंहेंद्रोपितस्मात्सर्वत्रजिज्ञसेदितिस्कांदे ॥ ९ ॥ संतिचतथामुक्ताइत्याह । वीतरागेति । मन्म
यामत्प्रचुराः। सर्वत्रमांविनानकिंचित्पश्यंतीत्यर्थः ॥ १० ॥ नचमद्भजनमात्रेणमुक्तिर्भवत्यन्यदेवतादिरू
पेण ।तथापि। सर्वेषामानुरूप्येणफलंददामीत्याह। येयथेति। भजामिसेवयामिफलदानेननतुगुणभावेन ।
कथमयंविशेषइत्यतआह। ममवर्त्मेति । अन्यदेवतायजंतोपिममवर्त्मैवानुवर्तंते। सर्वकर्मकर्तृत्वाद्धोक्तृत्वा
च्चमम । येप्यन्यदेवताभक्ताइतिवक्ष्यति। योदेवानांनामधाएकएवेतिश्रुतिः। भगवानेवचतत्राभिधीयते ।
अजस्यनाभावध्येकमर्पितमितिलिंगात् ॥ ११ ॥ कुतोममवर्त्मानुवर्ततेक्षिप्रंहि । अतएवहिफलप्राप्तिः।

तस्मात्तेधनसनयइतिहिश्रुतिः ॥ १२॥ अहमेवहिकर्तेत्याह । चातुर्वर्ण्यमिति । चतुर्वर्णसमुदायः । सात्त्विकोब्राह्मणः । सात्त्विकराजसःक्षत्रियः । राजसतामसोवैश्यः । तामसःशूद्रइतिगुणविभागः । कर्मविभागस्तुशमोदमइत्यादिनावक्ष्यते । क्रियायांवैलक्षण्यात्कर्ताप्यकर्ता । तथाहिश्रुतिः । विश्वकर्माविमनाइत्यादि । तनुर्विद्याक्रियाकृतिरितिच । साधितंचैतत्पुरस्तात् ॥ १३ ॥ अतएवनमांकर्माणिलिंपंति । इतश्चनलिंपंतीत्याह । नमेकर्मफलेस्पृहेति । इच्छामात्रंत्वस्ति नतुतत्राभिनिवेशः । तच्चोक्तं । आकांक्षन्नपिदेवोसौनेच्छतेलोकवत्परः । नह्याग्रहस्तस्यविष्णोर्ज्ञानंकामोहितस्यत्विति । नचकेचिन्मुक्ताभवंतीतिक्रमेण सर्वमुक्तिः । तथाहिश्रुतिः । ज्ञात्वातमेवंमनसाहृदाचभूयोनमृत्युमुपयातिविद्वानिति । कथंवाइत्यनंताइत्यनंतवदितिहोवाचेति ॥ १४॥ एवंज्ञात्वापिकर्मकरणेआचारोप्यस्तीत्याह । एवमिति । पूर्वतरंकर्मपूर्वभावीत्यर्थः॥१५॥कर्मकुर्वित्युक्तं । तस्यकर्मणोदुर्विज्ञेयत्वमाहसम्यग्वक्तुं।किंकर्मकिमकर्मेति ॥१६॥ नकेवलंतज्ज्ञात्वामोक्ष्यसे ज्ञात्वैवेत्याशयवानाह । कर्मणइति । तच्चोक्तं । अज्ञात्वाभगवान्कस्यकर्माकर्मविकर्मकं । दर्शनंयातिहिमुनेकुतोमुक्तिश्चतद्विनेति । अकर्मकर्माकरणं।कर्माकर्मान्यद्विकर्म निषिद्धंकर्मबंधकत्वात् ।

ततोविविच्यकर्मादिबोद्धव्यमित्यादि । नचशापादिनाकवयोप्यत्रमोहिताः । अशक्यंचैतज्ज्ञातुमित्याह । गहनेति ॥ १७ ॥ कर्मादिस्वरूपमाह । कर्मणीति । कर्मणिक्रियमाणेसत्यकर्मयःपश्येद्विष्णोरेवकर्मनाहंचित्प्रतिबिंबःकिंचित्करोमीति । अकर्मणिसुप्त्यादावकरणावस्थायांपरमेश्वरस्ययःकर्मपश्यतिअयमेवपरमेश्वरःसर्वदासर्वसृष्ट्यादिकरोतीति । सबुद्धिमानज्ञानीसएवचयुक्तोयोगयुक्तः । सर्वाकरणात्सएवचकृत्स्नकर्मकृत् । कृत्स्नफलवत्त्वात् ॥ १८ ॥ एतदेवप्रपंचयति । यस्येत्यादिश्लोकपंचकेन । उक्तप्रकारेणज्ञानाग्निदग्धकर्माणं ॥ १९ ॥ नचकामसंकल्पाभावेनालं । असंगंस्नेहंचत्यक्त्वा । ज्ञानस्वरूपमाहपुनः । नित्यतृप्तइति । नित्यतृप्तनिराश्रयेश्वरसरूपोहमस्मीतितथाविधः ॥ २० ॥ कामादित्यागोपायमाह । निराशीरिति । यतचित्तात्माभूत्वानिराशीरित्यर्थः । आत्मामनः । परिग्रहत्यागोऽनभिमानं । नैवकिंचित्करोतीत्यस्याभिप्रायमाह । नाप्नोतिकिल्बिषमिति ॥ २१ ॥ यतचित्तात्मनोलक्षणमाह । यदृच्छालाभेति । कथंद्वंद्वातीतत्वमित्यतआह । समःसिद्धाविति ॥ २२ ॥ उपसंहरति । गतसंगस्येति । गतसंगस्यफलस्नेहरहितस्य । मुक्तस्यशरीराद्यनभिमानिनः । ज्ञानावस्थितचेतसः । परमेश्वरज्ञानिनः ॥ २३ ॥ ज्ञानावस्थितेचतस्त्वंस्पष्टय

ति । ब्रह्मार्पणमिति । सर्वमेतद्ब्रह्मेत्युच्यते । तदधीनसत्ताप्रतीतित्वात् । नतुतत्स्वरूपत्वात् । उक्तंहि ।
त्वदधीनंयतःसर्वमतःसर्वोभवानिति । वदंतिमुनयःसर्वंनतुसर्वस्वरूपतइतिपाद्मे । सर्वंतत्प्रज्ञानेत्रमितिच ।
एतंह्येवबह्वृचाइत्यादिच । समाधिनासहब्रह्मैवकर्म ॥ २४ ॥ यज्ञभेदानाह । दैवमित्यादिना । दैवंभगवंतं ।
सएवतेषांयज्ञः भगवदुपासनं । यज्ञमितिक्रियाविशेषणं । नान्यत्तेषामस्तियतीनांकेषांचित् । यज्ञंभगवंतं ।
यज्ञेनयज्ञं । यज्ञोविष्णुर्देवतेत्यादिश्रुतिभ्यः । यज्ञेनप्रसिद्धेनैव । यज्ञंप्रतिजुह्वतीतिसर्वत्रसमं तंयज्ञमित्यादौ ।
उक्तंच । विष्णुंरुद्रेणपशुनाब्रह्माज्येष्ठेनसूनुना । अयजन्मानसेयज्ञेपितरंप्रपितामहइति ॥ २५ ॥ आत्मसंय
माख्योपायाग्नौ ॥ २७ ॥ द्रव्यंजुह्वतीतिद्रव्ययज्ञाः । तपःपरमेश्वरार्पणबुद्ध्यातत्रजुह्वतीतितपोयज्ञाइत्यादि ।
इदंतपोहविःएतद्ब्रह्माग्नौजुहोमितत्पूजार्थमितिहोमः । तदर्पणएवचहोमबुद्धिः ॥२८॥ अपरेप्राणायामपरा
यणाःप्राणमपानेजुह्वतिअपानंचप्राणे । कुंभकस्थाएवभवंतीत्यर्थः ॥२९॥ नियताहारत्वेनैवप्राणशोषात्प्राणा
न्प्राणेषुजुह्वति । यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनीत्यादिश्रुत्युक्तप्रकारेणवा । अन्यदपिग्रंथांतर
सिद्धं । यदस्याल्पाशनंतेनप्राणाःप्राणेषुवैहुताइति ॥३०॥ ब्रह्मणःपरमात्मनोमुखे । अहंहिसर्वयज्ञानांभोक्ताच

 
 

प्रभुरेवचेतिहिवक्ष्यति । मानसवाचिककायिककर्मजाएवहितेसर्वे । एवंज्ञात्वातानिकर्माणिकृत्वाविमोक्ष्य
से । युद्धंपरित्यज्ययन्मोक्षार्थंकरिष्यसितदपिकर्म । अतोविहितंनत्याज्यमितिभावः ॥३२॥ अखिलमुपास
नाद्यंगयुक्तं । ज्ञानफलमेवेत्यर्थः ॥३३॥ इदानीमपिज्ञान्येव ॥३४॥ तथाप्यभिभवान्मोहः । मातूक्ता । येनज्ञा
नेनमय्यात्मभूतेसर्वभूतान्यथोतस्मादेवमोहनाशात्पश्यसि ॥ ३५ ॥ करणभूतंज्ञानंस्तौतिपुनःश्लोकत्रयेण
॥३६-३८॥तत्साधनंविरोधिफलंचतदुत्तरैरुक्त्वोपसंहरति॥ ३९-४२ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्य
विरचितेगीताभाष्येचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥ ॥
ॐ ॥ तृतीयाध्यायोक्तमेवकर्मयोगंप्रपंचयत्यनेनाध्यायेन॥ ०॥ यदृच्छालाभसंतुष्टइत्यादिनासंन्यासं । कुरु
कर्मैवेत्यादिनाकर्मयोगंच । नियमनादिनासकललोककर्षणात्कृष्णः । तच्चोक्तं । यतःकर्षसिदेवेशनियम्यस
कलंजगत् । अतोवदंतिमुनयःकृष्णंत्वांब्रह्मवादिनइतिमहाकौर्मे । संन्यासशब्दार्थंभगवानेववक्ष्यति । अयं
प्रश्नाशयः । यदिसंन्यासःश्रेयःअधिकःस्यात्तर्हिसंन्यासस्यैषद्विरोधियुद्धमिति॥ १॥नायंसंन्यासोयत्याश्रमः । ॥ ५२॥
द्वंद्वत्यागात्तुसंन्यासान्मत्पूजैवगरीयसीतिवचनात् । तानिवाएतान्यवराणितपांसिन्यासएवात्यरेचयदिति

च। संन्यासस्तुतुरीयोयोनिष्क्रियाख्यःसधर्मकः। नतस्मादुत्तमोधर्मोलोकेकश्चनविद्यते । तद्भक्तोपिहियद्ग
च्छेत्तद्गृहस्थोनधार्मिकः। मद्भक्तिश्चविरक्तिस्तदधिकारोनिगद्यते। यदाधिकारोभवतिब्रह्मचार्यपिप्रव्रजेदिति
नारदीये। ब्रह्मचर्यादेवप्रव्रजेत्। यदहरेवविरजेदितिच। संन्यासेतुतुरीयेवैप्रीतिर्ममगरीयसी। येषामत्राधि
कारोनतेषांकर्मेतिनिश्चयइत्यादेश्चब्राह्मे। अतोनात्राश्रमःसंन्यासउक्तः॥२॥संन्यासशब्दार्थमाह। ज्ञेयइति।
संन्यासस्यनिःश्रेयसकरत्वंज्ञापयितुंतच्छब्दार्थंस्मारयति। ज्ञेयइति ॥३॥ संन्यासोहिज्ञानांतरंगत्वेनोक्तोन
तस्यतत्त्वग्रहणायेत्यादौ। अतःकथंसोवमइत्यतआह। सांख्ययोगाविति। उभयोरप्यंतरंगत्वेनाविरोधः।
अग्निमुग्धोहवैधूमतांतःस्वंलोकंनप्रतिजानाति। मावःपदव्यःपितरस्मदाश्रितायायज्ञशालासनधूमवर्त्मना
मित्यादिकाम्यकर्मविषयमितिभावः। येत्वन्यथावदंतितेबालाः॥४॥ एकमपीत्यस्याभिप्रायमाह। यत्सांख्यै
रिति। योगिभिरपिज्ञानद्वाराज्ञानफलंप्राप्यतइत्यर्थः॥ ५ ॥ इतश्चसंन्यासाद्योगोवरइत्याह। संन्यासस्त्वि
ति। योगाभावेमोक्षादिफलंनभवति। अतःकामजयादिदुःखमेवतस्य। मोक्षाद्येवहिफलंअन्यत्ततफलमल्प
त्वादफलमेवेत्याशयः। तच्चोक्तं। विनामोक्षफलंयत्तुनतत्फलमुदीर्यतइतिपाद्मे। यत्तुमहाफलयोग्यंतस्याल्पं

गीता फलमेवनभवति । यथापद्मरागस्यतंडुलमुष्टिः । महाफलश्चयोगयुक्तश्चेत्संन्यासइत्याह । योगयुक्तइति । मु भाष्यं.
निःसंन्यासी । तच्चोक्तं । सहिलोकेमुनिर्नामयःकामक्रोधवर्जितइति॥६॥एतदेवप्रपंचयति । योगयुक्तइति । अ० ५
॥ २३ ॥ सर्वभूतात्मभूतःपरमेश्वरः । यच्चाप्नोतीत्यादेः । सआत्मभूतःस्वसमीपंप्रत्यादानादिकर्तायस्यससर्वभूतात्मभू
तात्मा । संन्यासंस्पष्टयतिपुनःश्लोकद्वयेन ॥८॥९॥ संन्यासयोगयुक्तएवचकर्मणानलिप्यतइत्याह । ब्रह्मणी
ति । साधननियमस्योपचारत्वनिवृत्त्यर्थंपुनःपुनःफलकथनं ॥१०॥ एवंचाचारइत्याह।कायेनेति॥११॥पुनर्यु
क्त्यादिनियमनार्थंयुक्तायुक्तफलमाह।युक्तइति।युक्तोयोगयुक्तः ॥१२॥ पुनःसंन्यासशब्दार्थंस्पष्टयति।सर्वंक
र्माणीति । मनसेतिविशेषणादभिमानत्यागः ॥१३॥ नचकरोतिवस्तुतइत्याह । नकर्तृत्वमिति । प्रभुर्हिजी
वोजडमपेक्ष्य ॥१४॥ [१५] ज्ञानमेवाज्ञाननाशकमित्याह । ज्ञानेनेति । प्रथमज्ञानंपरोक्षं ॥१६॥ अपरोक्षज्ञानाव्यव
हितसाधनमाह । तद्बुद्धयइति ॥१७॥ परमेश्वरस्वरूपाणांसर्वत्रसाम्यदर्शनंचापरोक्षज्ञानसाधनमित्याशय
वानाह । विद्येति ॥१८॥ तदेवस्तौति । इहैवेति ॥१९॥ संन्यासयोगज्ञानानिमिलित्वाप्रपंचयत्यध्यायशेषेण ॥ ५३ ॥
॥२०॥ पुनर्योगस्याधिक्यंस्पष्टयति । बाह्यस्पर्शेष्विति । कामरहितःआत्मनियत्सुखंविंदति सएवब्रह्मयोग

युक्तात्माचेत्तदेवसुखमक्षयंविंदति। ब्रह्मविषयोयोगोब्रह्मयोगः।ध्यानादियुक्तस्यैवात्मसुखमक्षयमन्यथानेत्य
त्यर्थः ॥२१॥ संन्यासार्थंकामभोगंनिंदयति। येहीति ॥२२॥ तत्परित्यागंप्रशंसति। शक्नोतीति। कामक्रो
धोद्भवंवेगंसोढुंशक्नोति। शरीरविमोक्षणात्प्रागन्यथामनुष्यशरीरेसोढुंसुशकंतथानान्यत्रेतिभावः। ब्रह्मलो
कादिस्तुजितकामानामेवभवति ॥२३॥ ज्ञानिलक्षणंप्रपंचयत्युत्तरैःश्लोकैः। आरामःपरदर्शनादिनिमित्तंसु
खं। अत्रतुपरमात्मदर्शनादिनिमित्तंतत्। सुखंतूपद्रवक्षयेव्यक्तं। अत्रतुकामादिक्षयेव्यक्तमात्मसुखं। स्वयं
ज्योतिष्ट्वाद्भगवतस्तद्व्यक्तेरंतर्ज्योतिः। सर्वेषामंतर्ज्योतिष्ट्वेपिव्यक्तेर्विशेषः। असंप्रज्ञातसमाधीनांबाह्यादर्श
नात्। दर्शनेप्यकिंचित्करादेवशब्दः। उक्तंचैतत्। दर्शनस्पर्शसंभाषाद्यत्सुखंजायतेनृणां। आरामःसतुवि
ज्ञेयःसुखंकामक्षयोदितमितिनारदीये। स्वज्योतिष्ट्वान्महाविष्णोरंतर्ज्योतिस्तुतत्स्थितइतिच। अंतःसुख
त्वादेःकारणमाह। ब्रह्मणिभूतइति ॥२४॥ पापक्षयाच्चैतद्भवतीत्याह। लभंतइति। क्षीणकल्मषाभूत्वाछिन्न
द्वैधायतात्मानः।द्वेधाभावोद्वैधंसंशयोविपर्ययोवा। तच्चोक्तं। विपर्ययःसंशयोवायद्वैधंत्वकृतात्मनां।ज्ञानासि
नातुतच्छित्त्वामुक्तसंगःपरंव्रजेदिति। छिन्नद्वैधास्तएवायतात्मानोदीर्घमनसःसर्वज्ञाइत्यर्थः। ततएवछिन्न

द्वैधाः । तच्चोक्तं । क्षीणपापामहाज्ञानाजायंतेगतसंशयाइति । छिन्नद्वैधाःयतात्मानइतिवा ॥२५॥ सुलभंच तेषांब्रह्मेत्याह । कामक्रोधेति । अभितःसर्वतः ॥ २६ ॥ ध्यानप्रकारमाह । स्पर्शानित्यादिना । बाह्यान्स्पर्शान्बहिःकृत्वा । श्रोत्रादीनियोगेननियम्येत्यर्थः । चक्षुर्भ्रुवोरंतरेकृत्वा । भ्रुवोर्मध्यमवलोकयन्नित्यर्थः।उक्तंच । नासाग्रेवाभ्रुवोर्मध्येध्यानीचक्षुर्निधापयेदिति । प्राणापानौसमौकृत्वाकुंभकेस्थित्वेत्यर्थः ॥ २७॥ २८॥ ध्येयमाह । भोक्तारमिति ॥२९॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येपंचमोऽध्यायः ॥५॥

ॐ ॥ ज्ञानांतरंगंसमाधियोगमाहानेनाध्यायेन ॥छ॥ विवक्षितंसंन्यासमाहयोगेनसह । अनाश्रितइति । चतुर्थाश्रमिणोप्यग्निःक्रियाचोक्तादेवमेवेत्यादौ । अग्निर्ब्रह्मचतत्पूजाक्रियान्यासाश्रमेस्मृतेतिच । तस्मान्निरग्निरक्रियःसंन्यासीयोगीचनभवत्येव॥१॥संन्यासोपियोगांतर्भूतइत्याह । यंसन्यासमिति । कामसंकल्पाद्यपरित्यागेकथमुपायवान्स्यादित्याशयः॥२॥कियत्कालंकर्मकर्तव्यमित्यतआह । आरुरुक्षोर्मुनेरिति । योगमारुरुक्षोःउपायसंपूर्तिमिच्छोः । योगारूढस्यसंपूर्णोपायस्य । अपरोक्षज्ञानिनइत्यर्थः । कारणंपरमसुखकारणं । अपरोक्षज्ञानिनोपिसमाध्यादिफलमुक्तं । तस्यसर्वोपशमेनसमाधिरेवकारणंप्राधान्येनेत्यर्थः । तथापि

यदाभोक्तव्योपरमस्तदैवसम्यगसंप्रज्ञातसमाधिर्जायते। अन्यदातुभगवच्चरितादौस्थितिः। तच्चोक्तं। येत्वां पश्यंतिभगवंस्तएवसुखिनःपरं। तेषामेवतुसम्यक्कसमाधिर्जायतेनृणां। भोक्तव्यकर्मण्यक्षीणेजपेनकथयापिवा। वर्तयंतिमहात्मानस्त्वद्भक्तास्त्वत्परायणाइति ॥३॥ योगारूढस्यलक्षणमाह। यदेति। सम्यगननुषंगस्तस्यैवभवति। उक्तंच। स्वतोदोषलयोदृष्ट्वात्वितरेषांप्रयत्नतइति ॥४॥ सचयोगारोहःप्रयत्नेनकर्तव्यइत्याह। उद्धरेदित्यादिना ॥५॥ कस्यबंधुरात्मेत्याह। बंधुरात्मेति। आत्मामनः। आत्मनोजीवस्य। आत्मनामनसा। आत्मानंजीवं। आत्मैवमनः। आत्मनाबुद्ध्या। जीवेनैववा। सहिबुद्ध्याविजयति। उक्तंच। मनःपरंकारणमामनंति। मनएवमनुष्याणांकारणंबंधमोक्षयोः। उद्धरेन्मनसाजीवंनजीवमवसादयेत्। जीवस्यबंधुःशत्रुश्चमनएवनसंशयः। जीवेनबुद्ध्याहियदामनोजितंतदाबंधुःशत्रुरन्यत्रचास्य। ततोजयेद्बुद्धिबलेनरस्तद्देवेचभक्त्यामधुकैटभाराविंत्यादिब्रह्मवैवर्ते। अनात्मनःअजितात्मनःपुरुषस्य। अजितमनस्कस्य। सदपिमनोनुपकारीत्यनात्मा। सन्नपिभृत्योयस्यनभृत्यपदेवर्ततेसह्यभृत्यः। तस्यात्मामनएवशत्रुवच्छत्रुत्वेवर्तते ॥६॥ जितात्मनःफलमाह। जितात्मनइति। जितात्माहिप्रशांतोभवति। नतस्यमनःप्रायोविष

येषुगच्छति। तदाचपरमात्मासम्यक्हृद्याहितःसन्निहितोभवति। अपरोक्षज्ञानीसभवतीत्यर्थः। अपरोक्ष
ज्ञानिनोलक्षणंस्पष्टयति। शीतोष्णेत्यादिना। शीतोष्णादिषुकूटस्थः। ज्ञानविज्ञानतृप्तात्माविजितेंद्रियइति
कूटस्थत्वेहेतुः। विज्ञानंविशेषज्ञानं। अपरोक्षज्ञानंवा। तच्चोक्तं। सामान्यैर्येत्वविज्ञेयाविशेषाममगोचराः।
देवादीनांतुतज्ज्ञानंविज्ञानमितिकीर्तितं। श्रवणान्मननाच्चैवयज्ज्ञानमुपजायते। तज्ज्ञानंदर्शनंविष्णोर्वि
ज्ञानंशंभुरब्रवीत्। विज्ञानंज्ञानमंगादेर्विशिष्टंदर्शनंतथेत्यादि। कूटस्थोनिर्विकारः। कूटवत्स्थितइतिव्युत्प
त्तेः। कूटमाकाशः। कूटंखंविदलंव्योमसंधिराकाशउच्यतइत्यभिधानात्। योगीयोगंकुर्वन्। युक्तोयोगसंपू
र्णःएवंभूतोयोगानुष्ठातायोगसंपूर्णउच्यतइत्यर्थः॥७॥८॥ सएवचसर्वस्माद्विशिष्यते। साधुपापादिषुसम
बुद्धिः। जीवचितःपरमात्मनःसर्वस्यतन्निमित्तत्वस्यचसर्वत्रैकरूप्येण। चिद्रूपाएवहिजीवाः। विशेषस्त्वंतः
करणकृतः। सर्वेषांचसाधुत्वादिकंसर्वमीश्वरकृतमेवस्वतोनकिंचिदपि। उक्तंचैतत्सर्वं। स्वतःसर्वेपिचिद्रूपाः
सर्वदोषविवर्जिताः। जीवास्तेषांतुयेदोषास्तउपाधिकृतामताः। सर्वंचेश्वरतस्तेषांनकिंचित्स्वतएवतु। समा
एवह्यतःसर्वेवैषम्यंभ्रांतिसंभवं। एवंसमानजीवास्तुविशेषोदेवतादिषु। स्वाभाविकस्तुनियमादतएवसनात

नः। असुरादेस्तथादोषानित्याःस्वाभाविकाअपि। गुणदोषौमनुष्याणांनित्यौस्वाभाविकौमतौ। गुणैकमात्ररूपास्तुदेवाएवसदामताइतिब्राह्मे। नतुसाधुपापादीनांपूजादिसाम्यं। तत्रदोषस्मृतेः। समानांविषमापूजाविषमाणांसमातथा। क्रियतेयेनदेवोपिस्वपदाद्भ्रश्यतेपुमानितिपाद्मे। वित्तंबंधुर्वयःकर्मविद्याचैवतुपंचमी। एतानिमान्यस्थानानिगरीयोह्युत्तरोत्तरमितिमानवे। गुणानुसारिणींपूजांसमांदृष्टिंचयोनरः। सर्वभूतेषुकुरुतेतस्यविष्णुःप्रसीदति। वैषम्यमुत्तमत्वंतुददातिनरसंचयात्। पूजायाविषमादृष्टिःसमासाम्यंविदुःखजमितिब्रह्मवैवर्ते। सुहृदादिषुशास्त्रोक्तपूजादिकृतिरन्यूनाऽनधिकायासापिसमामता। तदप्याह। यथासुहृत्सुकर्तव्यंपितृशत्रुसुतेषुच। तथाकरोतिपूजादिसमबुद्धिःसउच्यतइतिगारुडे। प्रत्युपकारनिरपेक्षयोपकारकृत्सुहृत्। क्लेशस्थानंनिरूप्ययोरक्षांकरोतिसमित्रं। अरिर्वधादिकर्ता। कर्तव्येउपकारेअपकारेचययउदास्तेसउदासीनः। कर्तव्यमुभयमपियःकरोतिसमध्यस्थः। अवासितकृद्द्वेष्यः। आहचैतत्। द्वेष्योऽवासितकृत्कार्यमात्रकारीतुमध्यमः। प्रियकृत्प्रियोनिरूप्यापिक्लेशंयःपरिरक्षति। समित्रमुपकारंतुअनपेक्ष्योपकारकृत्। यस्ततःससुहृत्प्रोक्तःशत्रुश्चापिवधादिकृदिति॥९॥ समाधियोगप्रकारमाह। योगीयुंजीतेत्यादिना।

युंजीतसमाधियोगयुक्तंकुर्यात्। आत्मानंमनः ॥१०॥ योगंसमाधियोगंयुंज्यात्॥१२॥ निर्वाणंपरमांशरीर
त्यागोत्तरकालीनां ॥१५॥ अनशनादिनिषेधोशक्तस्य। उक्तंहिनिद्राशनभयश्वासचेष्टातंद्र्यादिवर्जनं । कृ
त्वाऽऽनिमीलिताक्षस्तुशक्तोध्यायन्प्रसिध्यतीतिनारदीये ॥१६॥ युक्ताहारविहारस्य। सोपायाहारादेः । या
वताश्रमाद्यभावोभवतितावदाहारादेरित्यर्थः ॥१७॥ आत्मनिभगवति ॥१८॥ आत्मनोयोगंभगवद्विषयं
योगं ॥१९॥ आत्मनामनसा। आत्मनिदेहे। आत्मानंभगवंतंपश्यन् ॥२०॥ तत्त्वतोभगवद्रूपात् ॥२१॥ दुः
खसंयोगोयेनवियुज्यतेसदुःखसंयोगवियोगः। नकेवलमुत्पन्नंदुःखंनाशयति उत्पत्तिमेवनिवारयतीतिदर्श
यतिसंयोगशब्देन। निश्चयेनयोक्तव्यःयोक्तव्यएवबुभूषुणेत्यर्थः ॥२३॥ सर्वान्सर्वविषयान् । अशेषतःएक
विषयोपिकामःस्वल्पःकादाचित्कोपिनकर्तव्यइत्यर्थः। मनसैवनियंतुंशक्यतेनान्येनेत्येवशब्दः ॥२४॥ बुद्धेः
कारणत्वंमनोनिग्रहेआत्मरमणेच ॥२५॥ यतोयतःयत्रयत्र। यतोयतोधावतीत्यादिप्रयोगात् । आत्मन्येव
वशंनयेत्। आत्मविषयएववशीकुर्यादित्यर्थः ॥२६॥ पूर्वश्लोकोक्तंप्रपंचयति। एवंयुंजन्निति ॥२८॥ ध्येयमा ॥ ५६॥
ह। सर्वभूतस्थमिति। सर्वभूतस्थमात्मानंपरमेश्वरं । सर्वभूतानिचात्मनिपरमेश्वरे । तंचपरमेश्वरंब्रह्मतृणा

दावैश्वर्यादिनासाम्येनपश्यति। तच्चोक्तं। आत्मानंसर्वभूतेषुभगवंतमवस्थितं। अपश्यत्सर्वभूतानिभगव त्यपिचात्मनीति। समंसर्वेषुभूतेषुतिष्ठंतंपरमेश्वरमितिच ॥२९॥ फलमाह। योमामिति। तस्याहंनप्रणश्या मीतिसर्वदायोगक्षेमवहः स्यामित्यर्थः। सचमेनप्रणश्यतिसर्वदामद्भक्तोभवति। सत्यपिस्वामिन्यरक्षत्यनाथः। एवंभृत्येप्यभजत्यभृत्यइतिहिप्रसिद्धिः। उक्तंच। सर्वदासर्वभूतेषुसमंमांयःप्रपश्यति। अचलातस्यभक्तिःस्या द्योगक्षेमंवहाम्यहमितिगारुडे ॥३०॥ एतदेवस्पष्टयति। सर्वभूतस्थितमिति। एकत्वमास्थितःसर्वत्रैकएवेश्व रइतिस्थितः। सर्वप्रकारेणवर्तमानोपिमय्येववर्तते। एवमपरोक्षंपश्यतोज्ञानफलंनियतमित्यर्थः। तथापिप्रा योनाधर्मंकरोति। कुर्वतस्तुमहच्चेद्दुःखसूचकंभवतीत्युक्तंपुरस्तात्। आहच। कदाचिदपिनाधर्मेबुद्धिर्विष्णु दृशांभवेत्। प्रमादात्तुकृतंपापंस्वल्पंभस्मीभविष्यति। आदिराजैस्तथादेवैर्ऋषिभिःक्रियतेकियत्। बाहुल्या त्कर्मणस्तेषांदुःखसूचकमेवतदिति ॥३१॥ साम्यंप्रकारांतरेणव्याचष्टे। आत्मौपम्येनेति ॥३२॥ एतस्ययोग स्यस्थिरांस्थितिंनपश्यामिमनसश्चंचलत्वात्। उक्तंच। मनसश्चंचलत्वाद्धिस्थितिर्योगस्यवैस्थिरा। विनाभ्या सान्नशक्यास्याद्वैराग्याद्वानसंशयइतिव्यासयोगे ॥३३॥ ३६ नचकदाचित्स्वयमेवमनोनियम्यते। शुभेच्छार

हितानांचद्वेषिणांचरमापतौ । नास्तिकानांचवैपुंसांसदामुक्तिर्नजायतइतिनिषेधाद्ब्राह्मे ॥३६॥ अयतिरप्रय
त्नः ॥३७॥ योगस्यजिज्ञासुरपिज्ञातव्योमयायोगइतियस्यातीवेच्छासोपि । शब्दब्रह्मातिवर्ततेपरंब्रह्मप्राप्नो
तीत्यर्थः ॥४४॥ नैकजन्मनीत्याह । प्रयत्नादिति । जिज्ञासुर्ज्ञात्वाप्रयत्नंकरोति । एवमनेकजन्मभिःसंसिद्धोप
रोक्षज्ञानीभूत्वापरांगतिंयाति । आहच । अतीवश्रद्धयायुक्तोजिज्ञासुर्विष्णुतत्परः । ज्ञात्वाध्यात्वातथादृष्ट्वा
जन्मभिर्बहुभिःपुमान् । विशेन्नारायणंदेवंनान्यथातुकथंचनेतिनारदीये ॥४५॥ ज्ञानिभ्योयोगज्ञानिभ्यः ।
तपस्विभ्यःकृच्छ्रादिचारिभ्यः । उक्तंच । कृच्छ्रादेरपियज्ञादेर्ध्यानयोगोविशिष्यते । तत्रापिशेषश्रीब्रह्मशिवा
दिध्यानतोहरेः । ध्यानंकोटिगुणंप्रोक्तमधिकंवामुमुक्षुणामितिगारुडे । अज्ञात्वाध्यायिनोध्यानाज्ज्ञानमेव
विशिष्यते । ज्ञात्वाध्यानंज्ञानमात्राद्ध्यानादपितुदर्शनं । दर्शनाच्चैवभक्तेश्चनकिंचित्साधनाधिकमितिनार
दीये ॥ ४६ ॥ ४७ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येषष्ठोऽध्यायः ॥ ६ ॥ ॥
ॐ ॥ साधनंप्राधान्येनोक्तमतीतैरध्यायैः । उत्तरैस्तुषड्भिर्भगवन्माहात्म्यंप्राधान्येनाह ॥१॥ आसक्तमनाःअ ॥ ५७ ॥
तीवस्नेहयुक्तमनाः । मदाश्रयः भगवानेवमयासर्वंकारयति सएवचमेशरणं तस्मिन्नेवाहंस्थितइतिस्थितः ।

असंशयंसमग्रमितिक्रियाविशेषणं ॥१॥ इदंमद्विषयंज्ञानं । विज्ञानंविशेषज्ञानं ॥२॥ दौर्लभ्यंज्ञानस्याह । मनु
ष्याणामिति ॥३॥ प्रतिज्ञातंज्ञानमाह । भूमिरित्यादिना । महतोहंकारएवांतर्भावः ॥४॥ अपराअनुत्तमा ।
वक्ष्यमाणामपेक्ष्य । जीवभूताश्रीः । जीवानांप्राणधारिणी । चिद्रूपाभूतासर्वदासती । एतन्महद्भूतमितिश्रु
तिः । जगादच । प्रकृतीद्वेतुदेवस्यजडाचैवाजडातथा । अव्यक्ताख्याजडासाचसृष्ट्याभिन्नाऽष्टधापुनः । महा
न्बुद्धिर्मनश्चैवपंचभूतानिचेतिह । अवरासाजडाश्रीश्चपरेयंधार्यतेयया । चिद्रूपासात्वनंताचअनादिनिध
नापरा । यत्समंतुप्रियंकिंचिन्नास्तिविष्णोर्महात्मनः । नारायणस्यमहिषीमातासाब्रह्मणोपिहि । ताभ्यामिदं
जगत्सर्वंहरिःसृजतिभूतराडितिनारदीये ॥५॥ नकेवलंतेजगत्प्रकृतीमद्वशेइत्येतावन्मदैश्वर्यमित्याह । अ
हमिति । प्रभवादेःसत्ताप्रतीत्यादिकारणत्वात्तद्धोकृत्वाचप्रभवइत्यादि । तथाचश्रुतिः । सर्वकामःसर्वकर्मा
सर्वगंधःसर्वरसःसर्वमिदमभ्यात्तोऽवाक्यनादरइति । आहच । स्रष्टापाताचसंहर्तानियंताचप्रकाशिता।यतः
सर्वस्यतेनाहंसर्वोसीत्यृषिभिःस्तुतः । सुखरूपस्यभोक्तृत्वान्नतुसर्वस्वरूपतः । आगमिष्यत्सुखंचापितच्चास्त्ये
वसदापितु । तथाऽप्यचिंत्यशक्तित्वाज्जातंसुखमतीवचेतिनारदीये ॥६॥ अहमेवपरतरः । मत्तोऽन्यत्परतरंन

किंचिदपि । इदंज्ञानं । रसोहमित्यादिविज्ञानं ॥७॥ अबादयोपिततएव ॥ तथापिरसादिस्वभावानांसारा
णांचस्वभावत्वेसारत्वेचविशेषतोपिसएवनियामकः । नत्वबादिनियमानुबद्धोरसादिस्तत्सारत्वादिश्चेतिद
र्शयति । अप्सुरसइत्यादिविशेषशब्दैः । भोगश्चविशेषतोरसादेरिति । उपासनार्थंच । उक्तंचगीताकल्पे ।
रसादीनांरसादित्वेस्वभावत्वेतथैवच । सारत्वेसर्वधर्मेषुविशेषेणापिकारणं । सारभोक्ताचसर्वत्रयतोऽतोजग
दीश्वरः । रसादिमानिनांदेहेससर्वत्रव्यवस्थितः । अबादयःपार्षदाध्येयःसज्ञानिनांहरिः । रसादिसंपत्त्याअ
न्येषांवासुदेवोजगत्पतिरिति । स्वभावोजीवएवच । सर्वस्वभावोनियतस्तेनैवकिमुतापरं । नतदस्तिविनाय
त्स्यान्मयाभूतंचराचरमितिच । धर्माविरुद्धःकामरागविवर्जितमित्याद्युपासनार्थं । उक्तंचगीताकल्पे । धर्मा
विरुद्धकामेऽसावुपास्यःकाममिच्छता । विहीनेकामरागादेर्बलेचबलमिच्छता । ध्यातस्तत्रत्वनिच्छद्भिर्ज्ञा
नमेवददातिसइत्यादि । पुण्योगंधइतिभोगापेक्षयाच । तथाचश्रुतिः । पुण्यमेवामुंगच्छतिनहवैदेवान्पापंग
च्छति । ऋतंपिबंतौसुकृतस्यलोकइत्यादिका । ऋतंचपुण्यं । ऋतंसत्यंतथाधर्मःसुकृतंचाभिधीयतइत्यभि
धानात् । ऋतंतुमानसोधर्मःसत्यंस्यात्सप्रयोगगइतिच । नचानश्नन्नन्योअभिचाकशीति । अन्योनिरन्नोपि

बलेनभूयानित्यादिविरोधः। स्थूलानशनोक्तेः। आहचसूक्ष्माशनं । प्रविविक्ताहारतरइवैवभवत्यस्माच्छा रीरादात्मनइति । नचात्रजीवउच्यते। शारीरादात्मनइतिभेदाभिधानात्। स्वप्नादिश्चशारीरएव। शारीर स्तुत्रिधाभिन्नोजाग्रदादिष्ववस्थितेरितिवचनाद्गारुडे । अस्मादितीश्वरव्यावृत्त्यर्थं । शारीरौतावुभौज्ञेयौजी वश्चेश्वरसंज्ञितः। अनादिबंधनस्त्वेकोनित्यमुक्तस्तथापरइतिवचनान्नारदीये । भेदश्रुतेश्च । सतिगत्यंतरेपु रुषभेदएवकल्प्योनत्ववस्थाभेदः। आहच। प्रविविक्तभुग्यतोह्यस्माच्छारीरात्पुरुषोत्तमः। अतोऽभोक्ताचभो क्ताचस्थूलभोगात्सएवत्वितिगीताकल्पे ॥८॥९॥ नत्वहंतेष्वितितदनाधारत्वमुच्यते । उक्तंच। तदा श्रितंजगत्सर्वंनासौकुत्रचिदाश्रितइतिगीताकल्पे ॥१२॥ तर्हिकथमेवंनज्ञायसइत्यतआह। त्रिभिरिति। ता दात्म्यार्थेमयट्। तच्चोक्तं। तादात्म्यार्थेविकारार्थेप्राचुर्यार्थेमयट्त्रिधेति। नहिगुणकार्यभूतामाया। गुणम यीतिचवक्ष्यति। सिद्धंचकार्यस्यापितादात्म्यं। तादात्म्यंकार्यधर्मादेःसंयोगोभिन्नवस्तुनोरितिव्यासयोगे। भावैःपदार्थैः। सर्वेभावादृश्यमानागुणमयाएतइतिदर्शयति। एभिरिति। ज्ञानिव्यावृत्त्यर्थमिदमिति। गुण मयदेहादिकंदृष्ट्वेश्वरदेहोपितादृशइतिमायामोहितइत्यर्थः। जगादचव्यासयोगे। गौणान्ब्रह्मादिदेहादीन्दृ

ष्ट्वाविष्णोरपीदृशः । देहादिरितिमन्वानोमोहितोऽज्ञोजनोभृशमिति । एभ्योगुणमयेभ्यः । गुणेभ्यश्चपरमि
तिवक्ष्यमाणत्वात् । केवलोनिर्गुणश्चेत्यादिश्रुतिभ्यश्च । त्रैगुण्यवर्जितमितिचोक्तं ॥१३॥ कथमनादिकाले
मोहानत्ययोबहूनामित्यतआह । दैवीति । अयमाशयः । मायाह्येषामोहिका । साचसृष्ट्यादिक्रीडादिमद्देव
संबंधित्वादतिशक्तेर्दुरत्यया । तथाहिदेवशब्दार्थंपठंति । दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमद
स्वप्नकांतिगतिष्विति । कथंदैवी मदीयत्वात् अहंहिदेवइति । अब्रवीच्च । श्रीर्भूर्दुर्गेतियाभिन्नामहामा
यातुवैष्णवी । तच्छक्त्यनंतांशहीनाऽथापितस्याश्रयात्प्रभोः । अनंतब्रह्मरुद्रादेर्नास्याःशक्तिकलापिहि ।
तेषांदुरत्ययाप्येषाविनाविष्णुप्रसादतइतिव्यासयोगे । तर्हिनकथंचिदत्येतुंशक्यतइत्यतआह । मामेवेति ।
अन्यत्सर्वंपरित्यज्यमामेवयेप्रपद्यंते । गुर्वादिवंदनंचमय्येवसमर्पयंति । सएवचतत्रस्थित्वागुर्वादिर्भवतीत्या
दिपश्यंति । आहचनारदीये । मत्संपत्त्यातुगुर्वादीन्भजंतेमध्यमानराः । मदुपाधितयातांश्चसर्वभूतानिचो
त्तमाइति । आचार्यचैत्यवपुषास्वगतिंव्यनंक्षीतिच ॥१४॥ तर्हिकिमितिसर्वेनात्यायन्नित्यतआह । नमामि ॥ ५९ ॥
ति । दुष्कृतित्वान्मूढाः । अतएवनराधमाः । अपहृतज्ञानत्वाच्चमूढाः । अतएवासुरंभावमाश्रिताः । सचव

क्ष्यतेप्रवृत्तिंचनिवृत्तिंचेत्यादिना। अपहारोभिभवः। उक्तंचैतद्व्यासयोगे। ज्ञानंस्वभावोजीवानांमाययाह्य
भिभूयतइति। असुषुरताअसुराः। तच्चोक्तंनारदीये। ज्ञानप्रधानादेवास्तुअसुरास्तुरताअसाविति ॥ १५॥
[१७]एकस्मिन्नेवभक्तिरित्येकभक्तिः। तच्चोक्तंगारुडे। मय्येवभक्तिर्नान्यत्रएकभक्तिःसउच्यतइति ॥१७॥ [१९]बहूनां
जन्मनामंतेज्ञानवान्भवति। तच्चोक्तंब्राह्मे। जन्मभिर्बहुभिर्ज्ञात्वाततोमांप्रतिपद्यतइति ॥१९॥ प्रकृत्यास्व
भावेन। स्वभावःप्रकृतिश्चैवसंस्कारोवासनेतिचेत्यभिधानात् ॥२०॥ यांयांब्रह्मादिरूपांतनुं। उक्तंचनारदी
ये। अंतोब्रह्मादिभक्तानांमद्भक्तानामनंततेति। मुक्तश्चकांगतिंगच्छेन्मोक्षश्चैवकिमात्मकइत्यादेःपरिहार
संदर्भाच्चमोक्षधर्मेषु। अवतारेमहाविष्णोर्भक्तःकुत्रचमुच्यतइत्यादेश्चब्रह्मवैवर्ते॥२१॥ [२४]कोविशेषस्तवान्येभ्य
इत्यतआह। अव्यक्तमिति। कार्यदेहादिवर्जितं। तद्वानिवप्रतीयसइत्यतआह। व्यक्तिमापन्नमिति। का
र्यदेहाद्यापन्नं। तच्चोक्तं। सदसतःपरं। नतस्यकार्यं। अपाणिपादः। आनंददेहंपुरुषंमन्यंतेगौणदैहिकमि
त्यादौ। भावंयाथार्थ्यं। तथाऽब्रवीच्च। याथातथ्यमजानंतःपरंतस्यविमोहिताइत्यादि ॥२४॥ अज्ञानंचम
दिच्छयेत्याह। नाहमिति। योगेनसामर्थ्योपायेनमाययाच। मयैवमूढोनाभिजानाति। तथाहपाद्मे। आ

गीता ॥ ३० ॥



त्मनःप्रकृतिंचैवलोकचित्तस्यबंधनं । स्वसामर्थ्येनदेव्याचकुरुतेसमहेश्वरइति ॥२५॥ नचमांमायाबध्नातीत्या
ह । वेदेति । नकश्चनातिसमर्थोपिस्वसामर्थ्यात् ॥२६॥ द्वंद्वमोहेनसुखदुःखादिविषयमोहेन । इच्छाद्वेषयोः
प्रवृद्धयोःनहिकिंचिज्ज्ञातुंशक्यं । कारणांतरमेतत् । सर्गेसर्गकालेआरभ्यैव । शरीरेहिसतीच्छादयः । पूर्वं
त्वज्ञानमात्रं ॥२७॥ विपरीताश्चकेचित्संतीत्याह । येषामिति ॥२८॥ जरामरणमोक्षायेत्यन्यकामनिवृत्त्यर्थं
मोक्षेसक्तिस्तुत्यर्थंवा नविधिः । मुमुक्षोरमुमुक्षुस्तुवरोह्येकांतभक्तिभागितीतरस्तुतेर्नारदीये । नात्यंति
कमितिच । देवानांगुणलिंगानामानुश्राविककर्मणां । सत्त्वएवैकमनसोवृत्तिःस्वाभाविकीतुया । अनिमित्ता
भगवतिभक्तिःसिद्धेर्गरीयसी । जरयत्याशुयाकोशंनिगीर्णमनलोयथेतिभागवतेलक्षणाच्च । आहच । सर्वे
वेदास्तुदेवार्थादेवानारायणार्थकाः । नारायणस्तुमोक्षार्थेमोक्षोनान्यार्थइष्यते । एवंमध्यमभक्तानामेकां
तानांनकस्यचित् । अर्थेनारायणोदेवःसर्वमन्यत्तदर्थकमितिगीताकल्पे । तएवचविदुः । यमेवैषवृणुतइति
श्रुतेः ॥ २९ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येसप्तमोऽध्यायः ॥ ७ ॥ ॥
ॐ ॥ मरणकालेकर्तव्यगत्याद्यस्मिन्नध्यायउपदिशति ॥ १२ ॥ परममक्षरंब्रह्म । वेदादिशंकानिवृत्त्यर्थमेतत् ।

आत्मन्यधियत्तदध्यात्मं। आत्माधिकारेयत्तदितिवा। तथाहि। जैवःस्वभावः। स्वाख्योभावःस्वभावइतिव्यु
त्पत्त्याजीवोवास्वभावः। सर्वदाऽस्त्येवैकप्रकारेणेतिभावः। अंतःकरणादिव्यावृत्त्यर्थोभावशब्दः। नह्येकप्र
कारेणस्थितिरंतःकरणादेः। विकारित्वात्। स्वशब्दईश्वरव्यावृत्त्यर्थः। भूतानांजीवानांभावानांजडपदार्था
नाचोद्भवकरेश्वरक्रियाविसर्गः। विशेषेणसर्जनंविसर्गइत्यर्थः ॥३॥ भूतानिसशरीरान्जीवानधिकृत्ययत्तद
धिभूतं। क्षरोभावःविनाशिकार्यपदार्थः। अव्यक्तांतर्भावेपि। तस्याप्यन्यथाभावाख्योविनाशोस्त्येव। तच्चो
क्तं। अव्यक्तंपरमेव्योम्निनिष्क्रियेसंप्रलीयतइति। तस्मादव्यक्तमुत्पन्नंत्रिगुणंद्विजसत्तमेतिच। विकारोऽव्य
क्तजन्महीतिचस्कांदे। पुरिशयनात्पुरुषोजीवः। सचसंकर्षणोब्रह्मावा। ससर्वदेवानधिकृत्यवर्ततेपतिरित्य
धिदैवतं। देवाधिकारस्थइतिवा। सर्वयज्ञभोक्तृत्वादेरधियज्ञः। अन्योधियज्ञोग्न्यादिःप्रसिद्धइतिदेहइतिवि
शेषणं। भोक्तारंयज्ञतपसां। त्रैविद्यामां। येप्यन्यदेवताभक्ताः। एतस्यवाअक्षरस्यप्रशासनेगार्गि। ददतोम
नुष्याःप्रशंसंतियजमानंदेवाइत्यादेः। कुतोह्यस्यध्रुवःस्वर्गःकुतोनैश्रेयसंपदमित्यादिपरिहाराच्चमोक्षधर्मे।
भगवांश्चेत्तद्भोक्तृत्वादेरधियज्ञत्वंसिद्धमितिकथमित्यस्यपरिहारःपृथङ्नोक्तः। सर्वप्राणिदेहस्थरूपेणाधियज्ञः।

अत्रेतिस्वदेहनिवृत्त्यर्थं। नहितत्रेश्वरस्यनियंतृत्वंपृथगस्ति।नात्रोक्तंब्रह्मभगवतोऽन्यत्। तेब्रह्मेत्युक्त्वासाधि
भूताधिदैवंमांसाधियज्ञंचयेविदुरितिपरामर्शात्। तस्यैवचप्रश्नात्। साधियज्ञमितिभेदप्रतीतेस्तन्निवृत्त्यर्थम
धियज्ञोहमित्युक्तं। मामित्यभेदसिद्धेरक्षरमित्येवोक्तं। आहचगीताकल्पे। देहस्थविष्णुरूपाणिअधियज्ञइती
रितः। कर्मेश्वरस्यसृष्ट्याख्यंतच्चापीच्छाद्यमुच्यते। अधिभूतंजडंप्रोक्तमध्यात्मंजीवउच्यते। हिरण्यगर्भोधि
दैवंदेवःसंकर्षणोपिवा। ब्रह्मनारायणोदेवःसर्वदेवेश्वरेश्वरइति। यथाप्रतीतंवासर्वमत्रनैवविरुध्यतइति।
स्कांदेच। आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते। देहाद्बाह्यंविनातीवबाह्यत्वादधिदैवतं। देवाधिका
रगंसर्वंमहाभूताधिकारगं। तत्कारणंतथाकार्यमधिभूतंतदंतिकादिति। महाकौर्मेच। अध्यात्मंदेहपर्यंतंके
वलात्मोपकारकं। सदेहजीवाभूतानियत्तेषामुपकारकृत्। अधिभूतंतुमायांतंदेवानामधिदैवतमिति ॥४॥
मद्भावंमयिसत्तां। निर्दुःखनिरतिशयानंदात्मिकां। तच्चोक्तं। मुक्तानांचगतिर्ब्रह्मन्क्षेत्रज्ञइतिकल्पितइति
मोक्षधर्मे ॥५॥ स्मरन्पुरुषस्त्यजतीतिभिन्नकालीनत्वेप्यविरोधइतिमंदमतेःशंकामाभूदित्यंतइतिविशेषणं।
सुमतेर्नैवशंकावकाशः। स्मरंस्त्यजतीत्येककालीनत्वप्रतीतेः।दुर्मतेर्दुःखान्नस्मरंस्त्यजतीतिभविष्यतिशंका।

त्यजन्देहंनकश्चित्तुमोहमाप्नोत्यसंशयमितिस्कांदे । तस्यैहैतस्यहृदयस्याग्रंप्रद्योततेतेनप्रद्योतेनैषआत्मानि ष्क्रामतीतिहिश्रुतिः। सदातद्भावभावितइत्यंतकालस्मरणोपायमाह। भावोंतर्गतंमनः। तथाभिधानात्। भावितत्वमतिवासितत्वं। भावनात्वतिवासनेत्यभिधानात्॥६॥ सदातद्भावभावितत्वंस्पष्टयति । अभ्यासे ति। अभ्यासएवयोगोऽभ्यासयोगः। दिव्यंपुरुषंपुरिशयंपूर्णंच। सवाअयंपुरुषःसर्वासुपूर्षुपुरिशयोनैनेनकिं चनानावृतंनैनेनकिंचनासंवृतमितिश्रुतेः। दिव्यंसृष्ट्यादिक्रीडायुक्तं। दिवुक्रीडेतिधातोः॥८॥ ध्येयमाह। क विमिति। कविंसर्वज्ञं। यःसर्वज्ञइतिश्रुतिः। त्वंकविःसर्ववेदनादितिब्राह्मे। धातारंधारणपोषणकर्तारं। डुधा ञ्धारणपोषणयोरितिधातोः। धाताविधातापरमोतसंदृगितिचश्रुतिः। ब्रह्मास्थाणुरित्यारभ्य तस्यप्रसादा दिच्छंतितदादिष्टफलांगतिमित्यादिचमोक्षधर्मे। तमसोव्यक्तात्परतःस्थितं। तमसःपरस्तादिति। अव्यक्तंवै तमःपरस्ताद्धिसततइतिपिप्पलादशाखायां। मृत्युर्वातमः। मृत्युर्वैतमोज्योतिरमृतमितिश्रुतेः॥९॥ वायुज यादियोगयुक्तानांमृतिकालेकर्तव्यमाहविशेषतःप्रयाणकालइति । वायुजयादिरहितानामपिज्ञानभक्तिवै राग्यादिसंपूर्णानांभवत्येवमुक्तिः। तद्वतांत्वीषज्ज्ञानाद्यसंपूर्णानामपिनिपुणानांतद्बलात्कथंचिद्भवतीतिवि

शेषः। उक्तंच भागवते। पानेनतेदेवकथासुधायाःप्रवृद्धभक्त्याविशदाशयाये। वैराग्यसारंप्रतिलभ्यबोधंय
थांजसात्वाऽपुरकुंठधिष्ण्यं। तथापरेत्वात्मसमाधियोगबलेनजित्वाप्रकृतिंबलिष्ठां। त्वामेवधीराःपुरुषंविशं
तितेषांश्रमःस्यान्नतुसेवयातइति। येतुतद्भाविताल्लोकएकांतित्वंसमाश्रिताः। एतदभ्यधिकंतेषांतत्तेजःप्र
विशंत्युतेतिचमोक्षधर्मे। संपूर्णानांभवेन्मोक्षोविरक्तिज्ञानभक्तिभिः। नियमेनतथापीरजयादियुतयोगिनां।
वश्यत्वान्मनसस्त्वीषत्पूर्वमप्याप्यतेध्रुवमितिव्यासयोगे ॥१०॥ तदेवसध्येयंप्रपंचयति। यदक्षरमित्यादिना।
प्राप्यतेमुमुक्षुभिरितिपदंस्वरूपं। पदगतावितिधातोः। तद्विष्णोःपरमंपदमितिश्रुतेश्च। गीयसेपदमित्येव
मुनिभिःपद्यसेयतइतिचनारदीये ॥ ११ ॥ ब्रह्मनाडींविनायद्यन्यत्रगच्छतितर्हि विनामोक्षंस्थानांतरंप्राप्नो
तीति सर्वद्वाराणिसंयम्य। निर्गच्छंश्चक्षुषासूर्यंदिशःश्रोत्रेणचैवहीत्यादिवचनाद्व्यासयोगे। मोक्षधर्मेच।
हृदिनारायणे। ह्रियतेत्वयाजगद्यस्माद्धृदित्येवंप्रभाष्यसइतिपाद्मे। नहिमूर्ध्निप्राणेस्थितेहृदिमनसःस्थितिःसं
भवति। यत्रप्राणोमनस्तत्रतत्रजीवःपरस्तथेतिव्यासयोगे। योगधारणामास्थितः। योगभरणएवाभियुक्तइ ॥ ६२ ॥
त्यर्थः ॥ १२ ॥ नित्यंयुक्तस्यनित्योपायवतः। योगिनःपरिपूर्णयोगस्य ॥१४॥ तत्प्राप्तिंस्तौति। मामिति। पर

सिद्धिंगताहितइतितत्रहेतुः ॥ १५ ॥ महामेरुस्थब्रह्मसदनमारभ्यनपुनरावृत्तिः । तच्चोक्तंनारायणगोपालकल्पे । आमेरुब्रह्मसदनादाजनान्नजनिर्भुवि । तथाप्यभावःसर्वत्रप्राप्यैववसुदेवजमिति ॥ १६ ॥ मांप्राप्यनपुनरावृत्तिरितिस्थापयितुमव्यक्ताख्यात्मसामर्थ्यंदर्शयितुंप्रलयादिदर्शयति । सहस्रयुगेत्यादिना । सहस्रशब्दोत्रानेकवाची । ब्रह्मपरं । साविश्वरूपस्यरजनीतिश्रुतिः । द्विपरार्धप्रलयएवात्रविवक्षितः । अव्यक्ताद्व्यक्तयःसर्वाइत्युक्तेः।उक्तंचमहाकौर्मे।अनेकयुगपर्यंतमहर्विष्णोस्तथानिशा । रात्र्यादौलीयतेसर्वमहरादौचजायतइति । यःससर्वेषुभूतेष्वितिवाक्यशेषाच्च ॥ १७ ॥ अव्यक्तोभगवान् । यंप्राप्यननिवर्तंतइतिमामुपेत्येत्युक्तस्यपरामर्शात् । अव्यक्तंपरमंविष्णुमितिप्रयोगाच्चगारुडे । धामस्वरूपं । तेजःस्वरूपंचगृहंप्राज्ञैर्धामेतिगीयतइत्यभिधानात् ॥ २१ ॥ परमसाधनमाह । पुरुषइति ॥ २२ ॥ यत्कालाद्यभिमानिदेवतागताआवृत्त्यनावृत्तीगच्छंतितताआह । यत्रेत्यादिना । कालइत्युपलक्षणं । अग्न्यादेरपिवक्ष्यमाणत्वात् ॥२३॥ ज्योतिरर्चिः । तेऽर्चिषमभिसंभवंतीतिहिश्रुतिः । तथाचनारदीये । अग्निंप्राप्यततश्चार्चिस्ततश्चाप्याहरादिकमिति । अभिमानिदेवताश्चाग्न्यादयः । कथमन्यथाअह्नआपूर्यमाणपक्षमितियुज्यते । दिवादिदेवताभिस्तुपूजितोब्रह्मयातिही

तिचब्राह्मे । मासाभिमानिभ्योऽयनाभिमानीचपृथक् । तच्चोक्तंगारुडे । पूजितस्त्वयनेनासौमासैःपरिवृतेन
हीति । अहरभिजिताशुक्लंपौर्णमास्याअयनंविषुवासह । तच्चोक्तंब्रह्मवैवर्ते । साह्नामध्यंदिनेनाथशुक्लेनचस
पूर्णिमा । सविष्वाचायनेनासौपूजितःकेशवंव्रजेदिति ॥२४॥ एतेसृतीसोपायेज्ञात्वाऽनुष्ठायनमुह्यति । तच्चा
हस्कांदे । सृतीज्ञात्वातुसोपायेअनुष्ठायचसाधनं । नकश्चिन्मोहमाप्नोतिनचान्यातत्रवैगतिरिति ॥२७॥ इति
श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येअष्टमोध्यायः ॥८॥ ॥ ॥
ॐ॥ सप्तमाध्यायोक्तंस्पष्टयत्यस्मिन्नध्याये॥ध॥राजविद्याप्रधानविद्या । प्रत्यक्षंब्रह्मावगम्यतेयेनतत्प्रत्यक्षाव
गमं । अक्षेष्विंद्रियेषुप्रतिप्रतिस्थितइतिप्रत्यक्षः। तथाचश्रुतिः। यःप्राणेतिष्ठन्प्राणादंतरोयंप्राणोनवेदयस्यप्रा
णःशरीरंयःप्राणमंतरोयमयत्येषतआत्मांतर्याम्यमृतः। योवाचितिष्ठन्यश्चक्षुषितिष्ठन्नित्यादेः । यएषोंतरक्ष
णिपुरुषोदृश्यतइतिच । अंगुष्ठमात्रःपुरुषोंगुष्ठंचसमाश्रितइतिच । त्वंमनस्त्वंचंद्रमास्त्वंचक्षुरादित्यइत्यादेश्च
मोक्षधर्मे । सप्रत्यक्षःप्रतिप्रतिहिसोक्षेष्वक्षवान्हिसभवतियएवंविद्वान्प्रत्यक्षंवेदेतिसामवेदेवारुणशाखायां ।
धर्मोभगवान्तद्विषयंधर्म्यं । सर्वंजगद्धत्तइतिधर्मः।पृथिवीधर्ममूर्धनीतिप्रयोगान्मोक्षधर्मे। भारभृत्कथितोयो

गीतिच। भर्तासन्भ्रियमाणोबिभर्तीतिचश्रुतिः। धर्मोवाइदमग्रआसीन्नपृथिवीनवायुर्नाकाशोनब्रह्मानरु
द्रोनदेवानऋषयःसोध्यायदितिचसामवेदेबाभ्रव्यशाखायां। प्रत्यक्षावगमशब्देनापरोक्षज्ञानसाधनत्वमुक्तं
॥२॥ तज्ज्ञानाद्याह। मयेति। तर्हिकिमितिनदृश्यतइत्यतआह। अव्यक्तमूर्तिनेति॥४॥ मत्स्थत्वेपियथापृ
थिव्यांस्पृष्ट्वास्थितानिनतथामयीत्याह। नचेति। नदृश्यश्चक्षुषाचासौनस्पृश्यःस्पर्शनेनचेतिहिमोक्षधर्मे। सं
ज्ञासंज्ञइतिच। ममात्मादेहएवभूतभावनः। महाविभूतेमाहात्म्यशरीरेतिहिमोक्षधर्मे॥५॥ मत्स्थानि नचम
त्स्थानीत्यस्यदृष्टांतमाह। यथाकाशस्थितइति। नह्याकाशस्थितोवायुःस्पर्शाद्याप्नोति॥६॥ ज्ञानप्रदर्शनार्थं
प्रलयादिप्रपंचयति। सर्वभूतानीत्यादिना॥७॥ प्रकृत्यवष्टंभस्तुयथाकश्चित्समर्थोपिपादेनगंतुं लीलयादंड
मवष्टभ्यगच्छति। सर्वभूतगुणैर्युक्तंनैवंत्वंज्ञातुमर्हसीतिमोक्षधर्मे। सर्वभूतगुणैर्युक्तंदैवंमांज्ञातुमर्हसीतिच।
विदित्वासप्तसूक्ष्माणिषडंगंचमहेश्वरं। प्रधानविनियोगस्थःपरंब्रह्माधिगच्छतीतिच। नकुत्रचिच्छक्तिरनंत
रूपाविहन्यतेतस्यमहेश्वरस्य। तथापिमायामधिरुह्यदेवःप्रवर्ततेसृष्टिविलापनेष्वित्यृग्वेदखिलेषु। मय्यनंत
गुणेनंतेगुणतोनंतविग्रहइतिभागवते। अथकस्मादुच्यतेपरंब्रह्मबृहतिबृंहयतिचेत्याथर्वणे। परास्यशक्तिर्वि

विधैवश्रूयतइतिच। विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि। नतेविष्णोजायमानोनजातोदे
वमहिम्नःपरमंतमापेत्यादेश्च। प्रकृतेर्वशादवशं। त्वमेवैतत्सर्जनेसर्वकर्मण्यनंतशक्तोपिस्वमाययैव। मायाव
शंचावशंलोकमेतत्तस्मात्स्रक्ष्यस्यत्सिपासीशविष्णोइतिगौतमखिलेषु ॥८॥ उदासीनवन्नतूदासीनः। तद
र्थमाह। असक्तमिति। अवाक्यनादरइतिहिश्रुतिः। द्रव्यंकर्मचकालश्चस्वभावोजीवएवच। यदनुग्रहतःसं
तिनसंतियदुपेक्षयेतिभागवते। यस्यासत्त्यैवसर्वकर्मशक्तिःकुतस्तस्यसर्वकर्मबंधइतिभावः। नकर्मणावर्ध
तेनोकनीयानितिहिश्रुतिः। यःकर्मापिनियामयतिकथंचतत्तंबध्नाति ॥९॥ उदासीनवदितिचेत्स्वयमेवप्रकृ
तिःसूयतइत्यतआह। मयेति। प्रकृतिसूतिद्रष्टाकर्ताहमेवेत्यर्थः।तथाचश्रुतिः।यतःप्रसूताजगतःप्रसूतीतोये
नजीवान्व्यससर्जभूम्यामिति॥१०॥तर्हिकेचित्कथंत्वामवजानंति।काचतेषांगतिरित्यतआह। अवजानंती
त्यादिना। मानुषींतनुं मूढानांमानुषवत्प्रतीतांनतुमनुष्यरूपां।उक्तंचमोक्षधर्मे। यत्किंचिदिहलोकेवैदेहबद्धं
विशांपते। सर्वंपंचभिराविष्टंभूतैरीश्वरबुद्धिजैः। ईश्वरोहिजगत्स्रष्टाप्रभुर्नारायणोविराट्। भूतांतरात्मावर
दःसगुणोनिर्गुणोपिच। भूतप्रलयमव्यक्तंशुश्रूषुर्नृपसत्तमेति।अवतारप्रसंगेचैतदुक्तं।अतोनावताराश्चपृथक्

शंक्याः। रूपाण्यनेकान्यसृजत्प्रादुर्भावभवायसः। वाराहंनारसिंहंचवामनंमानुषंतथेति तत्रैवप्रथमसर्गका
लएवावताररूपविभक्त्युक्तेः। अतोनतेषांमानुषत्वादिर्विनाभ्रांतिं। भूतंमहदीश्वरंचेतिभूतमहेश्वरं। तथा
हिबाभ्रव्यशाखायां। अनाद्यनंतंपरिपूर्णरूपमीशंवराणामपिदेववीर्यमिति। अस्यमहतोभूतस्यनिश्वसित
मितिच। ब्रह्मपुरोहितब्रह्मकायिकमहाराजिकेतिचमोक्षधर्मे ॥११॥ तेषांफलमाह। मोघाशाइति। वृथाशाः
भगवद्वेषिभिराशासितमामुष्मिकंनकिंचिदाप्यते। यज्ञादिकर्माणिचतेषांवृथैव। ज्ञानंचकेनापिब्रह्मरुद्रादि
भक्त्याद्युपायेननकश्चित्पुरुषार्थआमुष्मिकस्तैराप्यतइत्यर्थः। वक्ष्यतिच। तानहंद्विषतःक्रूरान्संसारेष्वित्या
दि। मोक्षधर्मेच। कर्मणामनसावाचायोद्विष्याद्विष्णुमव्ययं। मज्जंतिपितरस्तस्यनरकेशाश्वतीःसमाः। यो
द्विष्याद्विबुधश्रेष्ठंदेवंनारायणंहरिं। कथंसनभवेद्वेष्यआलोकांतस्यकस्यचिदिति। सर्वोत्कृष्टेज्ञानभक्तीहय
स्यनारायणेपुष्करविष्टराद्ये। सर्वांवमोद्वेषयुतश्चतस्मिन्भ्रूणानंतघ्नोप्यस्यसमोनचैवेतिसामवेदेशांडिल्यशा
खायां। द्वेषाच्चैद्यादयोनृपाः। वैरेणयन्नृपतयःशिशुपालपौंड्रसाल्वादयोगतिविलासविलोकनाद्यैः। ध्यायं
तआकृतधियःशयनासनादौतत्साम्यमीयुरनुरक्तधियःपुनःकिमित्यादितुभगवतोभक्तप्रियत्वज्ञापनार्थं।

नित्यध्यानस्तुत्यर्थंच। स्वभक्तस्यकदाचिच्छापबलाद्वेषिणोपिभक्तिफलमेवभगवान्ददातीति । भक्ताएवहि
तेपूर्वंशिशुपालादयःशापबलादेवद्वेषिणः । तत्प्रश्नेपूर्वपार्षदत्वशापादिकथनाच्चैतज्ज्ञायते। अन्यथाकिमि
तितदप्रस्तुतमुच्यते । भगवतःसाम्यकथनंतुद्वेषिणामपिद्वेषमनिरूप्यपूर्वतनभक्तिफलमेवददातीतिज्ञापयि
तुं । नमेभक्तःप्रणश्यतीतिवक्ष्यति । नचभावोहिभवकारणमित्यादिविरोधः । द्वेषभाविनांद्वेषएवभवतीति
हियुक्तं। अन्यथागुरुद्वेषिणोपिगुरुत्वंभवतीत्याद्यनिष्टमापद्येत। नचाकृतधीत्वेविशेषः। तेषामेवहिरण्यकशि
प्वादीनांपापप्रतीतेः। हिरण्यकशिपुश्चापिभगवन्निंदयातमः । विविक्षुरत्यगात्सूनोःप्रल्हादस्यानुभावतइति
यदनिंदत्पितामह्यंत्वद्भक्तेमयिचाघवानित्यारभ्य तस्मात्पितामेपूयेतदुरंताद्दुस्तरादघादितिप्रल्हादेनभगव
तोवरयाचनाच्च । बहुषुग्रंथेषुनिषेधः। कुत्रचिदेवतदुक्तिरितिविशेषः। यस्मिंस्तदुच्यतेतत्रैवचनिषेधउक्तः।
महातात्पर्यविरोधश्चोक्तःपुरस्तात् । अयुक्तिमद्भ्योयुक्तिमंत्येवबलवंतिवाक्यानि । युक्तयश्चोक्ताअन्येषां।
नचैतेषांकाचिद्गतिः। साम्येपिवाक्ययोर्लोकानुकूलाननुकूलयोर्लोकानुकूलमेवबलवत्। लोकानुकूलंचभक्त
प्रियत्वंनेतरत् । उक्तंचतेषांपूर्वभक्तत्वं । मन्येसुरान्भागवतांस्त्र्यधीशेसंरंभमार्गाभिनिविष्टचित्तानित्यादि।

अतोनभगवद्द्वेषिणांकाचिद्गतिरितिसिद्धं। द्वेषकारणमाह। राक्षसीमिति ॥ १२॥ नेतरेद्विषंतीतिदर्शयितुं
देवानाह। महात्मानइत्यादिना॥१३॥सर्वत्रैकएवनारायणःस्थितइत्येकत्वेन। पृथक्त्वेन सर्वतोवैलक्षण्येन।
बहुधाहितस्यरूपमाभाति। शुक्लमिवलोहितमिवाथोनीलमथार्जुनमितिहिसनत्सुजाते। दैवमेवापरइत्युक्त
प्रकारेणबहवोवाबहुधा॥ १५॥ प्रतिज्ञातंविज्ञानमाह। अहंक्रतुरित्यादिना। क्रतवोग्निष्टोमादयः। यज्ञोदेव
तामुद्दिश्यद्रव्यत्यागः। उद्दिश्यदेवान्द्रव्याणांत्यागोयज्ञइतीरितइत्यभिधानात् ॥१६॥ गम्यतेमुमुक्षुभिरिति
गतिः। तथाहिसामवेदेवासिष्ठशाखायां। अथकस्मादुच्यतेगतिरिति। ब्रह्मैवगतिस्तद्धिगम्यतेपापविमुक्तै
रिति। साक्षादीक्षतइतिसाक्षी। तथाहिबाष्कलशाखायां। ससाक्षादिदमद्राक्षीद्यदद्राक्षीत्तत्साक्षिणःसा
क्षित्वमिति। शरणमाश्रयःसंसारभीतस्य। परमंयःपरायणमितिह्युक्तं। नारायणंमहाज्ञेयंविश्वात्मानंपराय
णमितिच। संहारकालेप्रकृत्याजगदत्रनिधीयतइतिनिधानं। तथाह्यृग्वेदखिलेषु। अपश्यमप्ययेमाययावि
श्वकर्मण्यदोजगन्निहितंशुभ्रचक्षुरिति ॥ १८॥ सत्कार्यंअसत्कारणं। सदभिव्यक्तरूपत्वात्कार्यमित्युच्यते
बुधैः। असदव्यक्तरूपत्वात्कारणंचापिशब्दितमित्यभिधानात्। असच्चसच्चैवचयद्विश्वंसदसतःपरमितिचभा

रते ॥१९॥ तथापिमद्भजनमेवान्यदेवताभजनाद्वरमितिदर्शयति । त्रैविद्याइत्यादिना ॥ २० ॥ [३३]अनन्याःअ
न्यदचिंतयित्वा । तथाहिगौतमखिलेषु । सर्वंपरित्यज्यमनोगतंयद्विनादेवंकेवलंशुद्धमाद्यं । येचिंतयंतीह
तमेवधीराअनन्यास्तेदेवमेवाविशंतीति । कामंकालेनमहताएकांतित्वात्समाहितैः । शक्योद्रष्टुंसभगवान्प्र
भासंदृश्यमंडलइतिमोक्षधर्मे । नित्यमभितःसर्वतोयुक्तानां॥२२॥ तर्ह्यहंक्रतुरित्याद्यसत्यमित्यतआह । येपी
ति ॥२३॥ कारणमाहाविधिपूर्वकत्वे । अहंहीति ॥२४॥ फलंविविच्याह । यांतीति ॥२५॥ दुर्बलैस्त्वंपूजयि
तुमशक्योमहत्त्वादित्याशंक्याह।पत्रमिति । नत्वविहितपत्रादि । तस्यापराधत्वोक्तेर्वाराहादौ।भक्त्यैवाहंतु
ष्टइतिभावः । भक्तप्रियंसकललोकनमस्कृतंचेतिभारते । एतावानेवलोकेस्मिन्पुंसःस्वार्थःपरःस्मृतः । एकां
तभक्तिर्गोविंदेयत्सर्वत्रात्मदर्शनं ॥२६॥ अतोयत्करोषि ॥२७॥ [२९]तर्हिस्नेहादिमत्त्वादल्पभक्तस्यापिकस्यचिद्ब
हुफलंददासि। विपरीतस्यापिकस्यचिद्विपरीतमित्यतआह। समोहमिति। तर्हिनभक्तिःप्रयोजनमित्यतआ
ह। येभजंतीति। मयितेतेषुचाप्यहमितिममतेवशास्तेषामहंवशइति । उक्तंचपैंगिखिलेषु । येवैभजंतेपरमंपु
मांसंतेषांवशःसतुतेतद्वशाश्चेति। तद्वशाएवतेसर्वदा। तथापिबुद्धिपूर्वकत्वाबुद्धिपूर्वकत्वेनभेदः ।उद्धवादि

वच्छिशुपालादिवच्च । तच्चोक्तंतत्रैव । अबुद्धिपूर्वंयोऽवशस्तस्यध्यानात्पुनर्वशोभवतेबुद्धिपूर्वमिति ॥ २९ ॥ नभवत्येवप्रायस्तद्भक्तोदुराचारस्तथापिबहुपुण्येनयदिकथंचिद्भवति तर्हिससाधुरेवमंतव्यः ॥ ३० ॥ कुतः । क्षिप्रंभवतिधर्मात्मा । देवदेवांशादिष्वेवचैतद्भवति । उक्तंचशांडिल्यशाखायां । नाविरतोदुश्चरितान्नाभक्तो नासमाहितः । सम्यग्भक्तोभवेत्कश्चिद्वासुदेवेऽमलाशयः । देवर्षयस्तदंशाश्च भवंतिकचज्ञानतइति । अतो न्यःकश्चिद्भवतिचेद्दांभिकत्वेनसोनुमेयः । साधारणपापानांतुसत्संगान्महत्यपिकथंचिद्भक्तिर्भवति । साधा रणभक्तिर्वेतरेषां । सशठमतिरुपयातियोर्थतृष्णांतमधमचेष्टमवेहिनास्यभक्तमितिहिश्रीविष्णुपुराणे । साश्रद्दधानस्यविवर्धमानाविरक्तिमन्यत्रकरोतिपुंसामितिच । वेदास्त्वधीताममलोकनाथतप्तंतपोनानृत मुक्तपूर्वं । पूजांगुरूणांसततंकरोमिपरस्यगुह्यंनचभिन्नपूर्वं । गुप्तानिचत्वारियथागमंमेशत्रौचमित्रेचसमो स्मिनित्यं । तंचापिदेवंशरणंप्रपन्नएकांतभावेनभजाम्यजस्रं । एतैर्विशेषैःपरिशुद्धसत्त्वःकस्मान्नपश्येयमनं तमेनमितिमोक्षधर्मेआचारस्यसाधनत्वोक्तेश्च । ज्ञानाभावेचसम्यग्भक्त्यभावात् । तथाहिगौतमखिलेषु । विनाज्ञानंकुतोभक्तिःकुतोभक्तिर्विनाचतदिति । भक्तिःपरेस्वानुभवोविरक्तिरन्यत्रचैतत्त्रिकमेककालमि

तिभागवते ॥ ३१ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येनवमोऽध्यायः ॥ ९ ॥
ॐ ॥ उपासनार्थंविभूतीर्विशेषकारणत्वंचकेषांचिदनेनाध्यायेनाह ॥ध॥ प्रीयमाणाय । श्रुत्वासंतोषंप्राप्नुव
ते ॥१॥ प्रभवंप्रभावं । मदीयांजगदुत्पत्तिंवा । तद्वशत्वात्तस्येत्युच्यते । यद्यस्तितर्हिदेवादयोजानंतिसर्वज्ञत्वा
दतोनास्तीतिभावः। अहमादिर्हीतितूत्पत्तिरपियस्यवशाकुतस्तस्यजनिरितिज्ञापनार्थं। अहंसर्वस्यजगतःप्र
भवःप्रलयस्तथेतिचोक्तं । उक्तंचैतत्सर्वमन्यत्रापि । कोअद्धावेदकइहप्रवोचत्कुतआजाताकुतइयंविसृष्टिः ।
अर्वाग्देवाअस्यविसर्जनेनाथाकोवेदयतआबभूवेति । नतत्प्रभावमृषयश्चदेवाविदुःकुतोन्येल्पधृतिप्रमाण।
इत्यृग्वेदखिलेषु । अन्यस्त्वर्थोयोमामजमितिवाक्यादेवज्ञायते ॥२॥ अनश्चेष्टयिताआदिश्चसर्वस्येत्यनादिः।
अजत्वेनसिद्धेरितरस्य ॥ ३ ॥ तत्प्रथयति । बुद्धिरित्यादिना । कार्याकार्यविनिश्चयोबुद्धिः । ज्ञानंप्रतीतिः ।
ज्ञानंप्रतीतिर्बुद्धिस्तुकार्याकार्यविनिर्णयइत्यभिधानं । दमइंद्रियनिग्रहः । शमःपरमात्मनिष्ठता । शमोमन्नि
ष्ठताबुद्धेर्दमइंद्रियनिग्रहइतिभागवते ॥४॥ तुष्टिरलंबुद्धिः । अलंबुद्धिस्तथातुष्टिरित्यभिधानात् ॥ ५ ॥ पूर्वे
सप्तऋषयः । मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुः । वसिष्ठश्चमहातेजाइतिमोक्षधर्मोक्ताःतेहिसर्वपुराणेषू

च्यंते। चत्वारःप्रथमाःस्वायंभुवाद्याः। तेषांहीमाःप्रजाः। नह्यभविष्यतामिमाःप्रजाइतियुक्तं । विभागःप्राधान्यंचप्राथमिकत्वादेवभवति। गौतमखिलेषुचोक्तं। स्वायंभुवंरोचिषंचरैवतंचतथोत्तमं।वेदयःसप्रजावानिति। पूर्वेभ्योह्युत्तराजायंतइतिचतेषांप्राधान्यं। अजातेषुचज्यैष्ठ्यं। तापसस्यभगवदवतारत्वादनुक्तिः। तच्चभागवतेप्रसिद्धं। मानसत्वंचसर्वेषांमनूनामुक्तंभागवते । ततोमनून्ससर्जांतेमनसालोकभावनानिति । अन्यपुत्रत्वंत्वपरित्यज्यापिशरीरंतद्भवति। प्रमाणंचोभयविधवाक्यान्यथानुपपत्तिरेव । पूर्वइतिविशेषणाच्चैतत्सिद्धिः। मत्तोभावोयेषांतेमद्भावाः। एतेब्रह्मणोमनसाजातास्तेमत्तएवजाताइतिभावः ॥६॥ संतिर्चभंजतःकेचिदित्याह। अहमित्यादिना॥८॥[12]ब्रह्मपरिपूर्णं। अथकस्मादुच्यतेपरंब्रह्मबृहतिबृंहयतिचेतिश्रुतिः।बृहबृहिवृद्धावितिपठंति। परमंयोमहद्ब्रह्मेतिच। विविधमासीदितिविभुः। तथाहिवारुणशाखायां। विभुप्रभुप्रथमंमेहनावतइति सह्येवप्राभवद्विविधोभवदिति। सोऽकामयतबहुस्यांप्रजायेयेत्यादेश्च॥१२॥ [16]विभूतयोविविधभूतयः॥१६॥ [17]नंजायतेऽर्दयतिचसंसारमितिजनार्दनः। तथाचबाभ्रव्यशाखायां। सभूतःसजनार्दनइति। सह्यासीत्सनासीत्सोर्दयतीति ॥१८॥ [21]विष्णुःसर्वव्यापित्वप्रवेशित्वादेः। विष्लृव्याप्तौविशप्रवेशनइतिचपठंति।

गतिश्चसर्वभूतानांप्रजानांचापिभारत । व्याप्तौमेरोदसीपार्थकांतिश्चाभ्यधिकामम । अधिभूतनिविष्टश्चत
दिच्छुश्चास्मिभारत । क्रमणाच्चाप्यहंपार्थविष्णुरित्यभिसंज्ञितइतिमोक्षधर्मे ॥२१॥ [२६]सुखरूपःपाल्यतेलीयतेच
जगदनेनेतिकपिलः । प्रीतिःसुखंकमानंदइत्यभिधानात् । प्राणोब्रह्मकंब्रह्मखंब्रह्मेतिच । ऋषिंप्रसूतंकपिलंय
स्तमग्रेज्ञानैर्बिभर्तिजायमानंचपश्येत् । सुखादनंतात्पालनाल्लापनाच्चयंवैदेवंकपिलमुदाहरंतीतिचबाभ्रव्य
शाखायां ॥२६॥ [३१]आनंदरूपत्वात्पूर्णत्वाल्लोकरमणत्वाच्चरामः । आनंदरूपोनिष्परिमाणएषलोकश्चैतस्माद्र
मतेतेनरामइतिशांडिल्यशाखायां । रश्चामश्चेतिव्युत्पत्तिः ॥३१॥ [३७]आच्छादयतिसर्वंवासयतिवसतिसर्वत्रे
ति वासुः । देवशब्दार्थउक्तःपुरस्तात् । छादयामिजगद्विश्वंभूत्वासूर्यइवांशुभिः । सर्वभूताधिवासश्चवासुदेव
स्ततोह्यहमितिमोक्षधर्मे । विशिष्टःसर्वस्मादासमंतात्सएवेतिव्यासः । तथाचाग्नेयशाखायां । सव्यासोवीति
तमव्वैविसोधस्तात्सउत्तरतःसपश्चात्सपूर्वस्मात्सदक्षिणतःसउत्तरतइतीति । यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूय
तेपिवा । अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितइतिच ॥३७॥ [३९]मयाविनायद्भूतंस्यात्तन्नास्ति । विश्वरूपअ
नंतगतिरनंतभागअनंतगअनंतइत्यादिमोक्षधर्मे ॥ ३९ ॥ [४१]यद्यद्विभूतिमदितिविस्तरः । विष्ण्वादीनितुस्व

रूपाण्येव। अन्यानितुतेजोयुक्तानि । तथाचपैंगिखिलेषु । विशेषकारुद्रवैन्येंद्रदेवराजन्याद्याअंशयुताअ
न्यजीवाः। कृष्णव्यासौरामकृष्णौचरामकपिलौयज्ञप्रमुखाःस्वयंसइति । सएवैकोभार्गवदाशरथिकृष्णाद्या
स्त्वंशयुताअन्यजीवाइतिगौतमखिलेषु। ऋषयोमनवोदेवामनुपुत्रामहौजसः। कलाःसर्वेहरेरेवसप्रजापतयः
स्मृताः । एतेस्वांशकलाःपुंसःकृष्णस्तुभगवान्स्वयमितिभागवते ऋष्यादीनंशयुतत्वेनोक्त्वावराहादीन्स्व
रूपत्वेनाह। तुशब्दएवार्थे। अन्यस्तुविशेषोनकुत्राप्यवगतः। अंशत्वंतत्राप्यवगतं । उद्दबर्हात्मनःकेशावि
ति। मृडयंतीतिबहुवचनंचायुक्तं। नह्यंतरान्यदुक्त्वापूर्वमपराम्रश्यतक्रियोच्यमानादृष्टाकुत्रचित् ॥४१॥ कि
मितिवक्ष्यमाणप्राधान्यज्ञापनार्थं। नतूक्तनिष्फलत्वज्ञापनाय। तथासतिनोच्येत। अज्ञात्वैनंसर्वविशेषयुक्तं
देवंपरंकोविमुच्येतबंधादितिचऋग्वेदखिलेषु । त्वंतुबहुफलप्राप्तियोग्यइतितवेतिविशेषणं । अन्यस्तुत्यर्थ
त्वेनप्रसिद्धश्चैकत्रकिंशब्दः । रागद्वेषौयदिस्यातांतपसाकिंप्रयोजनं । तावुभौयदिनस्यातांतपसाकिंप्रयो
जनमित्यादौ । प्राधान्यंचसिद्धमेकत्रदर्शनात्सर्वत्रभगवद्दर्शनस्ययोमांपश्यतिसर्वत्रेत्यादौ ॥ ४२ ॥ इतिश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येदशमोऽध्यायः ॥ १० ॥ ॥ ॥

ॐ ॥ यथाश्रुतेध्यानंशक्यंतथास्वरूपस्थितिरनेनाध्यायेनोच्यते ॥७॥ [४]प्रभुःसमर्थः । नास्तितस्मात्परंभूतंपु
रुषाद्वैसनातनादितिमोक्षधर्मे । प्रभुरीशःसमर्थश्चेत्यभिधानं॥४॥[५]हरिःसर्वयज्ञादिभागहारित्वात् । इडोपहूतं
गेहेषुहरेभागंक्रतुष्वहं । वर्णोमेहरितःश्रेष्ठस्तस्माद्धरिरितिस्मृतइतिमोक्षधर्मे॥९॥ [११]सर्वाश्चर्यमयंसर्वाश्चर्यात्म
कं ॥११॥ सहस्रशब्दोनंतवाची । तदपिपाकशासनविक्रमइत्यादिवत्प्रत्यायनार्थमेव । तथाह्यृग्वेदखिलेषु ।
अनंतशक्तिःपरमोनंतवीर्यःसोनंततेजाश्चततस्ततोपीति । महातात्पर्याच्चप्राबल्यं । नचपरिमाणोक्त्याकिं
चित्प्रयोजनं ॥१२॥ [१६]अनेकशब्दोनंतवाची । अनंतबाहुमितिचवक्ष्यति । सर्वतःपाणिपादंतदित्यादिच । वि
श्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् । संबाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमीजनयन्देवएक
इत्यृग्वेदे । विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोहस्तउतविश्वतस्पात् । संबाहुभ्यांनमतिसंपतत्रैर्द्यावापृथिवी
जनयन्देवएकइतियजुर्वेदे । विश्वशब्दश्चानंतवाची । सर्वसमस्तंविश्वंचअनंतंपूर्णमेवचेत्यभिधानात् । अनं
तपादंतमनंतबाहुमनंतवक्त्रंपुरुरूपमेकमितिबाभ्रव्यशाखायां । महत्त्वाद्युक्तिस्तुतदात्मकत्वेनापिभवति ।
अन्यथाऽनादिमत्परंब्रह्मेत्याद्ययुक्तंस्यात् । एकत्रानंतान्यस्यरूपाणीत्यनंतरूपः । अन्यत्रत्वपरिमाणइति ।

उक्तंह्युभयमपि। परात्परंयन्महतोमहांतंयदेकमव्यक्तमनंतरूपमितियजुर्वेदे। अव्यक्तस्यानंतत्वादेवमहतो महत्त्वेऽपरिमेयत्वंसिद्ध्यति। महांतंचसमावृत्यप्रधानंसमवस्थितं। अनंतस्यनतस्यांतःसंख्यानंचापिविद्यतइ त्यादित्यपुराणे। तानिचैकैकानिरूपाण्यनंतानिचैकत्रभवंति।असंख्याताज्ञानकास्तस्यदेहाःसर्वेपरीमाणवि वर्जिताश्चेत्यृग्वेदखिलेषु। यावान्वाअयमाकाशस्तावानेषोंतर्हृदयआकाशःउभेअस्मिन्द्यावापृथिवीअंतरे वसमाहिते। उभावग्निश्चवायुश्चसूर्याचंद्रमसावुभावितिच। कृष्णस्यगर्भजगतोतिभरावसन्नपार्ष्णिप्रहारपरि रुग्णफणातपत्रमितिचभागवते। नचैतदयुक्तं। अचिंत्यशक्तित्वादीश्वरस्य। अचिंत्याःखलुयेभावानतांस्त र्केणयोजयेदितिश्रीविष्णुपुराणे। नैषातर्केणमतिरापनेयेतिचश्रुतिः। अतिप्रसंगस्तुमहातात्पर्यवशाद्वाक्य बलाच्चापनेयः। नहिघटवत्कश्चिदपिपदार्थोनदृष्टइत्येतावताप्रमाणदृष्टःसनिराक्रियते।केषुचित्पदार्थेषुवाक्य व्यवस्थाअचिंत्यशक्तित्वाभावादंगीक्रियते। गुणाःश्रुताःसुविरुद्धाश्चदेवेसंत्यश्रुताअपिनैवात्रशंका। चिंत्या अचिंत्याश्चतथैवदोषाःश्रुताश्चनाज्ञैर्हितथाप्रतीताः। एवंपरेन्यत्रश्रुताश्रुतानांगुणागुणानांचक्रमाद्व्यवस्थेति जाबालखिलश्रुतेश्च।उपचारत्वपरिहारायनमध्यमिति।अन्यथाद्यंताभावेनैवतत्सिद्धेः। विश्वरूपःपूर्णरूपः।

सविश्वरूपोनूनरूपोयतोयंसोनंतरूपोनहिनाशोस्तितस्येतिशांडिल्यशाखायां ॥१६॥ अनलार्कद्युतिमित्यु
क्तेमितत्वशंकामपाकरोति । अप्रमेयमिति ॥१७॥ शशिसूर्यनेत्रमित्यप्यहंक्रतुरित्यादिवत् । तदंगजाःसर्वसु
रादयोपितस्मात्तदंगेत्यृषिभिःस्तुतास्तइत्यृग्वेदखिलेषु । चंद्रमामनसोजातश्चक्षोःसूर्योअजायतेतिच । बहु
रूपत्वाद्ब्रह्माश्रयत्वंचतेषांयुक्तं ॥१९॥ मातापित्रोरंतरंगःसएकरूपेणचान्यैःसर्वगतःसएकइतिवारुणश्रुतेःए
केनैवरूपेणद्यावापृथिव्योरंतरंव्याप्तोभवति । पश्यमेपार्थरूपाणीतिबहूनिहिरूपाणिप्रतिज्ञातानि । मातापि
तरौचपृथिवीद्यावौ । मानोमातापृथिवीदुर्मतौधात् । मधुद्यौरस्तुनःपितेत्यादिप्रयोगात् । नतुनियमतोभयप्र
दंतत्स्वरूपं । नारदस्यतदभावात् । केषांचित्तथादर्शयतिभगवान् । प्रीयंतिकेचित्तस्यरूपस्यदृष्टौबिभेतिक
श्चिदभ्यसेसर्वतृप्तिरितिवारुणशाखायां । नतुतंसर्वेपश्यंति । अदृष्ट्वापितन्निरूप्यभयंद्रष्टुस्तथाप्रतिभाति ।
तथाचगौतमखिलेषु । दृष्ट्वादेवंमोदमानाअदृष्ट्वाप्येतद्भयाद्बिभ्यतोदृष्टवत्ते । पश्यंतितन्व्यस्तचक्षुर्मुखांस्तुत
स्मिन्नेवैतेमनसोगतत्वादिति ॥२०॥ धर्मांतरज्ञानार्थमेवकोभवानितिपृच्छति । यथाकश्चित्किंचिन्नामादिकं
जानन्नपिजातिज्ञानार्थंपृच्छतिकस्त्वमिति । यदितमेवनजानातितर्हिविष्णवित्येवंसंबोधनंनस्यात् । त्वमक्ष

रमित्यादिच ॥ ३१ ॥ कालशब्दो जगद्बंधनच्छेदनज्ञानादिसर्वभगवद्धर्मवाची । कलबंधने कलच्छेदने कल ज्ञाने कलकामधेनुरितिचपठंति । प्रसिद्धश्चसशब्दोभगवति । नियतंकालपाशेनबद्धंशक्रविकत्थसे । अयंस पुरुषःश्यामोलोकस्यहरतिप्रजाः । बध्वातिष्ठतिमांरौद्रःपशून्रशनयायथेतिमोक्षधर्मेविष्णुनाबद्धोबलिर्वक्ति । विष्णौचाधीश्वरेचित्तंधारयन्कालविग्रहइतिभागवते । प्रवृद्धःपरिपूर्णोऽनादिर्वा । ऋतंचसत्यंचाभीद्धादि तिहिश्रुतिः । एतन्महद्भूतमनंतमितिच । प्रविष्णुरस्तुतवसस्तवीयान्त्वेषंह्यस्यस्थविरस्यनामेतिच । नतुवर्ध नं । नासौजजाननमरिष्यतिनैधतेसावितिभागवते । यस्यदिव्यंहितद्रूपंहीयतेवर्धतेनचेतिमोक्षधर्मे । नकर्म णेतितुकर्मणापिनकिमुस्वयमिति । लोकान्समाहर्तुमिहविशेषेणप्रवृत्तः । भ्रात्रादींश्चर्तइत्यपिशब्दः । प्रत्यनी कत्वंतुपरस्परतया । सर्वेनभविष्यंतिहि । अक्षौहिण्यादिभेदेनबहुवचनंचयुक्तं ॥ ३२ ॥ यो[३]ऽस्यैशिरश्छिन्नंभू मौपातयतितच्छिरोभेत्स्यतीतितत्पितुर्वराज्जयद्रथोपिविशेषेणोक्तः । सवरावासवीशक्तिरितिकर्णः ॥३४॥ यदे[३६]तद्वक्ष्यमाणंतत्स्थानेयुक्तमेवेत्यर्थः ।अग्नीषोमाद्यंतर्यामितयाजगद्धर्षणादेर्हृषीकेशः । केशत्वंत्वंशूनांतन्नि यतत्वादेः । प्रमाणंतुशशिसूर्यनेत्रमित्यत्रोक्तं । हृषीकाणामिंद्रियाणामीशत्वाच्चहृषीकेशः । तेषांविशेषतईश

त्वंचयःप्राणेतिष्ठन्नित्यादौसिद्धं । नमेहृषीकाणिपतंत्यसत्पथइत्यादिप्रयोगाच्च । इतरोऽर्थोमोक्षधर्मेषुसिद्धः।
॥ ४१ ॥ सूर्याचंद्रमसौशश्वत्केशैर्मेअंशुसंज्ञितैः। बोधयंस्थापयंश्चैवजगदुत्पद्यतेपृथक्।बोधनात्स्थापनाच्चैवजगतोहर्ष 
संभवात्। अग्नीषोमकृतैरेभिःकर्मभिःपांडुनंदन । हृषीकेशोहमीशानोवरदोलोकभावनइति ॥३६॥ कथंस्था
नइतितदाह। कस्मादित्यादिना। पूर्णश्चासावात्माचेतिमहात्मा। आत्मशब्दश्चोक्तोभारते।यच्चाप्नोतियदाद
त्तेयच्चात्तिविषयानिह। यच्चास्यसंततोभावस्तस्मादात्मेतिभण्यतइति। तत्परंसदसतोःपरं। असच्चसच्चैवचय
द्विश्वंसदसतःपरमितिचभारते ॥३७॥ [४२]एकस्त्वमेवकारयितानान्योस्त्यथापि ॥४२॥ स्वंकंरूपंतुभ्रांतप्रतीत्या।
अन्यथातदपिस्वकमेव। प्रमाणानितूक्तानिपुरस्तात् ॥५०॥ इतिश्रीमदानं०गीताभाष्येएकादशोध्यायः ११
ॐ ॥ अव्यक्तोपासनाद्भगवदुपासनस्योत्तमत्वंप्रदर्श्यतदुपायंप्रदर्शयत्यस्मिन्नध्याये ॥७॥ तदुपासनमपिमो
क्षसाधनंप्रतीयते। श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्राविति । अनाद्यनंतंमहतःपरंध्रुवं
निचाय्यतंमृत्युमुखात्प्रमुच्यतइतिच । अव्यक्तंचमहतःपरं । महतःपरमव्यक्तमित्युक्तपरामर्शोपपत्तेः । उपा ॥ ७१ ॥
स्यतांश्रियमव्यक्तसंज्ञांभक्त्यामर्त्योमुच्यतेसर्वबंधैरितिसामवेदेआग्निवेश्यशाखायां। महच्चमाहात्म्यंतस्यावे

देषूच्यते। चतुष्कपर्दायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते। तस्यांसुपर्णावृषणानिषेदतुर्यत्रदेवादधिरेभाग
धेयमिति। चतुःशिखंडायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्तइतिच।अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरु
तविश्वदेवैरित्यारभ्य अहंराष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानां। तांमादेवाव्यदधुःपुरुत्राभूरिस्था
त्रांभूर्यावेशयंतीं। मयासोअन्नमत्तियोविपश्यतियःप्राणितियईंशृणोत्युक्तं। अमंतवोमांतउपक्षियंतिश्रुधि
श्रुतश्रद्धिवंतेवदामि। यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधां। अहंरुद्रायधनुरातनोमिब्रह्मद्विषे
शरवेहंतवाउ। अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वं१तःसमुद्रे। परोदिवापरएनापृथिव्यैतावतीमहिनासं
बभूवेत्यादिच।त्वयाजुष्टःसऋषिर्भवतिदेवित्वयाब्रह्मागतश्रीरुतत्वयेतिच।इतिशंकाकस्यचिद्भवति।अतोजा
नन्नपिसूक्ष्मयुक्तिज्ञानार्थंपृच्छति। एवमिति।एवंशब्देनदृष्टश्रुतरूपंमत्कर्मकृदित्यादिप्रकारश्चपरामृश्यते।अ
व्यक्तंप्रकृतिः। महतःपरमव्यक्तमितिप्रयोगात्। यत्तत्त्रिगुणमव्यक्तंनित्यंसदसदात्मकं। प्रधानंप्रकृतिंप्राहुरवि
शेषंविशेषवदितिभागवते। अक्षरंचतत्। अक्षरात्परतःपरइतिश्रुतेः। परंतुब्रह्मनहिभगवतोन्यत्। आनंदमा
नंदमयोवसानेसर्वात्मकेब्रह्मणिवासुदेवइतिभागवते।रूपंचेदृशंसाधितंपुरस्तात्। उपासनंचतथैवकार्यं। सह

स्रशीर्षापुरुषःसहस्राक्षःसहस्रपादित्यारभ्य तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यतइतिहिसा
भ्यासा । आदित्यवर्णत्वादिश्चनवृथोपचारत्वेनांगीकार्यः । तथाचसामवेदेसौकरायणश्रुतिः । स्थाणुर्हवैप्रा
जापत्यःसप्रजापतिंपितरमेत्योवाच । मुमुक्षुभीराधुभिःपूतपापैःकिमुहवैतारकंतारवाच्यं । ध्यानंचतस्याप्र
रुचेःकथंस्याद्ध्येयश्चकःपुरुषोलोमपादइति । तंहोवाच । एषवैविष्णुस्तारकोलोमपादोध्यानंचतस्याप्ररुचेर्व
दामि । सोनंतशीर्षोबहुवर्णःसुवर्णोध्येयःसवैलोहितादित्यवर्णः । श्यामोथवाहृदयेसोष्टबाहुरनंतवीर्योनंत
बलःपुराणइति । अरूपत्वादेस्तुगतिरुक्तापुरस्तात् । पुरुषभेदश्चप्रश्नादौप्रतीयते । त्वांपर्युपासतेयेचाप्यक्षर
मित्यादौ ॥ १ ॥ भवंतुत्वदुपासकाएवोत्तमाः । इतरेषांतुकिंफलमित्यतआह । येत्वित्यादिना । अनिर्देश्यत्वं
चोक्तंभागवतेमायायाः । अप्रतर्क्यादनिर्देश्यादितिकेष्वपिनिश्चयइति । ईश्वरस्तुदैवशब्देनोक्तोदैवमन्येपरइ
त्यत्र । उक्तंचसामवेदेकाषायणश्रुतौ । नासदासीन्नोसदासीत्तदानीमिति नमहाभूतंनोपभूतंतदासीदित्या
रभ्य तमआसीत्तमसागूळ्हमग्रइति । तमोह्यव्यक्तमजरमनिर्देश्यमेषाह्येवप्रकृतिरिति । सर्वगाचिंत्यादिलक्ष ॥ ७२ ॥
णाचसा । तथाहिमोक्षधर्मे । नारायणगुणाश्रयादजरादतींद्रियादग्राह्यादसंभवतःअसत्यादहिंस्राल्ललामा

द्वितीयप्रवृत्तिविशेषादवैरादक्षयादमरादक्षरादमूर्तितःसर्वस्याःसर्वकर्तुःशाश्वततमसइति। आसीदिदंतमो
भूतमप्रज्ञातमलक्षणं। अप्रतर्क्यमविज्ञेयंप्रसुप्तमिवसर्वतइतिमानवे। कूटस्थोक्षरउच्यतइतिवक्ष्यति। कूटआ
काशेस्थिताकूटस्था।आकाशेसंस्थिताह्येषाततःकूटस्थितामतेत्यृग्वेदखिलेषु।सासर्वगानिश्चलालोकयोनिः
साचाक्षराविश्वगाविरजस्केतिसामवेदेगौपवनशाखायां॥३॥कथंतर्हित्वदुपासकानामुत्तमत्वमित्यतआह।
क्लेशइति। अव्यक्तागतिर्दुःखंह्यवाप्यते। गतिर्मार्गः। अव्यक्तोपासनद्वारकोमत्प्राप्तिमार्गोदुःखमाप्यतइत्य
र्थः। अतिशयोपासनसर्वेंद्रियातिनियमनसर्वत्रसमबुद्धित्वसर्वभूतहितेरतत्वातिशुद्धाचारसम्यग्विष्णुभ
क्त्यादिसाधनसंदर्भमृतेनाव्यक्तापरोक्ष्यं। तदृतेचनविष्णुप्रसादः। सत्यपितस्मिन्नसम्यग्भगवदुपासनमृते।
नर्तेचतंमोक्षः। विनाव्यक्तोपासनंभवत्येवभगवदुपासकानांमोक्षइतिक्लेशिष्ठोयंमार्गइतिभावः। तथाप्यपरो
क्षीकृताव्यक्तानांसुकरंभगवदुपासनमित्येतावत्प्रयोजनं। तत्रापियोव्यक्तापरोक्ष्येप्रयासःतावताप्रयासेन
यदिभगवंतमुपास्तेऊनेनवातदाभगवदापरोक्ष्यमेवभवतीतिद्वितीयमधिकं। इंद्रियसंयमाद्यूनभावेसत्युपा
सकस्यापिदेवीनातिप्रसादमेतीति। देवस्तुतानिसाधनानिभक्तिमतस्स्वयमेवाप्रयत्नेनददातीतिचाति

सौकर्यमितिभक्तानांभगवदुपासने इतरत्रक्लेशोधिकतरः । तदेतत्सर्वंपर्युपासतेसन्नियम्याधिकतरइतिप
रिसंतरप्रशब्दैःप्रतीयते। सामवेदेमाधुच्छंदसशाखायांचोक्तं । भक्ताश्चयेऽतीवविष्णावतीवजितेंद्रियाःस
म्यगाचारयुक्ताः। उपासतेतांसमबुद्धयश्चतेषांदेवीदृश्यतेनेतरेषां। दृष्टाचसाभक्तिमतीवविष्णौदत्वोपास्तौ
सर्वविघ्नांश्छिनत्ति। उपास्यतंवासुदेवंविदित्वाततस्ततःशांतिमत्यंतमेतीति । उक्तंचसामवेदेआयास्यशा
खायां। प्रसन्नोभवितादेवःसोव्यक्तेनसहैवतु। यावतातत्प्रसादोहितावतैवनसंशयः। नतत्प्रसादमात्रेणप्री
यतेसमहेश्वरः। तस्मिन्प्रीतेतुसर्वस्यप्रीतिस्तुभवतिध्रुवं। यद्यप्युपासनाधिक्यंतथापिगुणदोहिसः। मुक्तिदश्च
सएवैकोनाव्यक्तादिस्तुकश्चनेति। ममात्मभावमिच्छंतोयतंतेपरमात्मनइतिचमोक्षधर्मेश्रीवचनं। धर्मनित्ये
महाबुद्धौब्रह्मण्येसत्यवादिनि। प्रश्रितेदानशीलेचसदैवनिवसाम्यहमितिच। महतःपरंतुब्रह्मैव । तथाहिभ
गवतासयुक्तिकमभिहितं। वदतीतिचेन्नप्राज्ञोहि। त्रयाणामेवचैवमुपन्यासःप्रश्नश्चेत्यादि । तमितिपुलिंगा
च्चैतत्सिद्धिः। महतःपरत्वंत्वव्यक्तपरस्यभवत्येव। तथाचाग्निवेश्यशाखायां। अनाद्यनंतंमहतःपरंध्रुवमिति
परोहिदेवःपुरुहूतोमहत्तइति। नचाव्यक्तस्वरूपंभगवतानिषिद्धं। भारतादौसाधितत्वात् । शरीररूपकवि

न्यस्तगृहीतेरित्यादौतुसांख्यप्रसिद्धंप्रधानंनिषिध्यवैदिकमव्यक्तमेवोक्तं। तथाचसौकरायणश्रुतिः ।शरीर
रूपिकासाऽशरीरस्यविष्णोर्यतःप्रियासाजगतःप्रसूतिरिति ।सुव्रतानांक्षिप्रंमहदैश्वर्यंदेवीददातिनदेवइति
विशेषः।सुवर्णवर्णांपद्मकरांचदेवींसर्वेश्वरींव्याप्तजटांचबुध्वा।सैवेतिवैसुव्रतानांतुमासान्महाविभूतिंश्रीस्तु
दद्यान्नदेवइत्यृग्वेदखिलेषु॥ ५ ॥ मदुपासकानांभक्तानांनकश्चित्क्लेशइतिदर्शयति।येत्वित्यादिना ।उक्तं
चसौकरायणश्रुतौ।उपासतेयेपुरुषंवासुदेवमव्यक्तादेरीप्सितंकिंनुतेषामिति ।तेषामेकांतिनःश्रेष्ठास्तेचैवा
नन्यदेवताः।अहमेवगतिस्तेषांनिराशीःकर्मकारिणामितिमोक्षधर्मे ॥ ६ ॥ ७ ॥ [१२] श्रेज्ञानपूर्वादभ्यासाज्ज्ञा
नमेवविशिष्यते।ज्ञानमात्रात्सज्ञानंध्यानं।तथाचसामवेदेअनभिम्लानशाखायां ।अधिकंकेवलाभ्यासा
ज्ज्ञानंतत्सहितंततः।ध्यानंततश्चापरोक्ष्यंततःशांतिर्भविष्यतीति।ध्यानात्कर्मफलत्यागइतिस्तुतिः।अन्य
थाकथमसमर्थोसीत्युच्येत।तयोस्तुकर्मसंन्यासात्कर्मयोगोविशिष्यतइतिचोक्तं । सर्वाधिकंध्यानमुदाहरं
तिध्यानाधिकेज्ञानभक्तीपरात्मन् । कर्माफलाकांक्षमथोविरागस्त्यागश्चनध्यानकलाफलार्हइतिकाषायण
शाखायां । वाक्यसाम्येप्यसमर्थविषयत्वोक्तेस्तात्पर्याभावइतरत्रप्रतीयते।ध्यानादिप्राप्तिकारणत्वाच्चत्या

गस्तुतिर्युक्ता। केवलध्यानात्फलत्यागयुक्तंध्यानमधिकं। ध्यानयुक्तस्त्यागएवात्रोक्तः। अन्यथाकथंत्यागा च्छांतिरनंतरमित्युच्यते। कथंचध्यानादाधिक्यं। तथाचगौपवनशाखायां। ध्यानात्तुकेवलात्त्यागयुक्तंत दधिकंभवेदिति। नहित्यागमात्रानंतरमेवमुक्तिर्भवति। भवतिचध्यानयुक्तात्। केवलत्यागस्तुतिरेवमपिभ वति। यथाऽनेनयुक्तोजेतानान्यथेत्युक्ते ॥ १२ ॥ सर्वारंभपरित्यागीशुभाशुभपरित्यागीत्यादेःसामान्यवि शेषव्याख्यानव्याख्येयभावेनापुनरुक्तिः। हर्षादिभिर्मुक्तइत्युक्तेकादाचित्कमपिभवतीतियोनहृष्यतीत्यादि। उपचारपरिहारार्थंपूर्वं। आधिक्यज्ञापनार्थंभक्त्यभ्यासः। येतुसर्वाणिकर्माणीत्यादेःप्रपंचएषः ॥ १३–१९॥ पिंडीकृत्योपसंहरति। येतुधर्म्यामृतमिति। धर्मोविष्णुस्तद्विषयंधर्म्यं। धर्म्यंमृत्यादिसंसारनाशकंचेतिध र्म्यामृतं। श्रदास्तिक्यं। श्रन्नामास्तिक्यमुच्यतइत्यभिधानात्। तद्दधानाःश्रद्दधानाः ॥ २० ॥ इतिश्रीम दानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येद्वादशोऽध्यायः ॥ १२ ॥

ॐ॥ पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान्पिंडीकृत्यविविच्यदर्शयत्यनेनाध्यायेन ॥ ०१ ॥ यँद्विकारियेनविकारेणयुक्तं यतश्चयत्यतोयातिप्रवर्तते। सचप्रवर्तकः। यतश्चयदित्यस्मात्प्रवर्तते। क्षेत्रमितिवचनं। सचयइतिस्वरूप

मात्रं ॥४॥ ब्रह्मसूत्राणिशारीरकसूत्राणि॥५॥ इँच्छादयोविकाराः ॥ ७॥ सचयोयत्प्रभावश्चेतिवक्तुंतज्ज्ञान साधनान्याह । अमानित्वमित्यादिना । आत्माल्पत्वंज्ञात्वापिमहत्त्वप्रदर्शनंदंभः । ज्ञात्वापिस्वात्मनोऽल्पत्वं दंभोमाहात्म्यभावनमितिह्यभिधानं। आर्जवंमनोवाक्कायकर्मणामवैपरीत्यं॥ ८॥ सँक्तिःस्नेहः। सएवातिप क्वोऽभिष्वंगः। स्नेहःसक्तिःसएवातिपक्वोभिष्वंगउच्यतइत्यभिधानं ॥ १०॥ तँत्त्वज्ञानार्थदर्शनं अपरोक्षज्ञा नार्थशास्त्रदर्शनं ॥ १२॥ परंब्रह्मेति सचयइतिप्रतिज्ञातमुच्यते। अन्यच्चप्रभावइति । आदिमद्देहादिवर्जित मनादिमत्। अन्यथानादीत्येवस्यात्॥ १३॥ सँर्वेंद्रियाणिगुणांश्चाभासयतीतिसर्वेंद्रियगुणाभासं । इंद्रियव र्जितत्वाद्यर्थउक्तःपुरस्तात्॥ १५॥ विकाँरांतर्भावाज्ज्ञानसाधनंप्रथमतउक्तं । बहुत्वात्साधनात्युपयोगात्प्र भावः॥ १९॥ यतश्चयदितिवक्तुंप्रकृतिविकारपुरुषान्संक्षिप्याह। गुणाःसत्त्वादयः। तेषामत्यल्पोविशेषोल यात्सर्गेइतिविकाराःपृथगुक्ताः । कार्याकार्यगुणास्तिस्रोयतःस्वल्पोद्भवोजनावितिमाधुच्छंदसशाखायां ॥ २०॥ कार्यंशरीरं। शरीरंकार्यमुच्यतइत्यभिधानं। कारणानींद्रियाणि। भोगोनुभवः । सहिचिद्रूपत्वाद नुभवति। प्रकृतिश्चजडत्वात्परिणामिनी। कार्यकारणकर्तृत्वेकारणंप्रकृतिंविदुः । भोक्तृत्वेसुखदुःखानांपुरु

षंप्रकृतेःपरमितिभागवते ॥ २१ ॥ यंतश्चयदित्याह । उपद्रष्टेति । अनुमंताअन्वनुविशेषतोनिरूपकः ॥ २३ ॥
पुरुषःसुखदुःखानामितिजीवउक्तः । पुरुषंप्रकृतिंचेतिजीवेश्वरौसहैवोच्येते । अन्यत्रमहातात्पर्यविरोधः । उ
त्कर्षेहिमहातात्पर्यं । तथाहिसौकरायणश्रुतिः । अवाच्योत्कर्षेमहत्त्वात्सर्ववाचांसर्वन्यायानांचमहत्तत्परत्वं।
विष्णोरनंतस्यपरात्परस्यतच्चापिह्यस्त्येवनचात्रशंका । अतोविरुद्धंतुयदत्रमानंतदक्षजादावथवापियुक्तिः।
नतत्प्रमाणंकवयोवदंतिनचापियुक्तिर्ह्यूनमतिर्हिदृष्टेरिति । अतोयुक्तिभिरप्येतदपलापोनयुक्तः । अतोयया
युक्त्याविद्यमानत्वादिकल्पयतिसाप्याभासरूपेतिसदेवमाहात्म्यंवेदैरुच्यतइतिसिध्यति । अवांतरंचतात्प
र्यंतत्रास्ति । उक्तंचतत्रैव । अवांतरंतत्परत्वंचसत्त्वेमहद्वाप्येकत्वात्तुतयोरनंतइति । श्यामत्वाद्यभिधानाच्च ।
युक्तंचपुरुषमतिकल्पितयुक्त्यादेराभासत्वं । अज्ञानसंभवात् । नतुस्वतःप्रमाणस्यवेदस्याभासत्वं । अदर्शनं
चसंभवत्येवपुंसांबहूनामप्यज्ञानात् । तर्ह्यस्मदनधीतश्रुत्यादौविपर्ययोपिस्यादितिनवाच्यं । यतस्तत्रैवाह ।
नैतद्विरुद्धावाचोनैतद्विरुद्धायुक्तयइतिहप्रजापतिरुवाचप्रजापतिरुवाचेति । तद्विरुद्धंचजीवसाम्यं । आ
भासएवचेतिचोक्तं । जनमेजयउवाच । बहवःपुरुषाब्रह्मन्नुताहोएकएवतु । कोह्यत्रपुरुषश्रेष्ठस्तंभवान्वक्तु

मर्हति। वैशंपायनउवाच। नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वह। बहूनांपुरुषाणांहियथैकायोनिरुच्यते। तथा तंपुरुषंविश्वमाख्यास्यामिगुणाधिकमितिमोक्षधर्मे। नचैतत्सर्वंस्वप्नेंद्रजालवत्। वैधर्म्याच्चनस्वप्नादिवदितिभ गवद्वचनं। नचस्वप्नादिवदेकजीवकल्पितत्वेमानंपश्यामः। विपर्ययेमातूक्ताद्वितीये । उक्तंचायास्यशाखा यां । स्वप्नोहवाअयंचंचलत्वान्नचस्वप्नोनहिविच्छेदएतदितीति। नायंदोषः। नहीश्वरस्यजीवैक्यमुच्यते । जीवस्यहीश्वरैक्यमितिध्येयं । तदपिननिरुपाधिकं। अतोनप्रतिबिंबत्वविरोध्यैक्यं। तथाचमाधुच्छंदसश्रु तिः। ऐक्यंचापिप्रातिबिंब्येनविष्णोर्जीवस्यैवैतद्धृषयोवदंतीति। अहंग्रहोपासनेचफलाधिक्यमाग्निवेश्यश्रु तिसिद्धं। अहंग्रहोपासकस्तस्यसाम्यमभ्याशोहवाअश्नुतेनात्रशंकेति । तदीयोहमितिज्ञानमहंग्रहइतीरित इतिवामने। तद्वशत्वात्तुसोस्मीतिभृत्यैरेवनतुस्वतइतिच । प्रातिबिंब्येनसोस्मिभृत्यश्चेतिभावना। तथाह्या यास्यशाखायां। भृत्यश्चाहंप्रातिबिंब्येनसोस्मीत्येवंह्युपास्यःपरमःपुमान्सइति । प्रातिबिंब्यंचतत्साम्यमेव ॥२४॥ सांख्येनवेदोक्तभगवत्स्वरूपज्ञानेन। कर्मिणामपिश्रुत्वाज्ञात्वाध्यात्वादृष्टिः। श्रावकाणांचज्ञात्वाध्या त्वा। सांख्यानांचध्यात्वा। तथाचगौपवनश्रुतिः। कर्मकृच्चापितच्छ्रुत्वाज्ञात्वाध्यात्वानुपश्यति। श्रावकोपि

तथाज्ञात्वाध्यात्वाज्ञान्यपिपश्यति । अन्यथातस्यदृष्टिर्हिकथंचिन्नोपजायतइति । अन्यइत्यशक्तानामप्युपा
यदर्शनार्थं ॥२५॥२६॥ पुनश्चप्रकृतिपुरुषेश्वरस्वरूपंसाम्यादिधर्मयुक्तमाह । यावदित्यादिना ॥ २७–२९ ॥
आत्मानंचाकर्तारंयःपश्यतिसपश्यति॥३०॥एकस्थमेकस्मिन्नेवविष्णौस्थितं।ततएवचविष्णोर्विस्तारं॥३१॥
नचव्ययादिस्तस्येत्याह । अनादित्वादिति। सादिहिप्रायोव्ययिगुणात्मकंच । नकरोतीत्यादेरर्थउक्तःपुरस्ता
त् । नलौकिकक्रियादिस्तस्य । अतोनप्रज्ञमित्यादिवदिति ॥३२॥ भूतेभ्यःप्रकृतेश्चमोक्षसाधनं । अमानित्वा
दिकं ॥ ३५ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येत्रयोदशोऽध्यायः ॥ १३ ॥
॥ ॐ ॥ साधनंप्राधान्येनोत्तरैरध्यायैर्वक्ति ॥०॥ महद्ब्रह्मप्रकृतिः । साचश्रीर्भूर्दुर्गेतिभिन्ना । उमासरस्वत्या
द्यास्तुतदंशयुताअन्यजीवाः । तथाचकाषायणश्रुतिः । श्रीर्भूर्दुर्गाभगवतीतुमायासालोकसूतिर्जगतोबंधि
काच । उमावागाद्याअन्यजीवास्तदंशास्तदात्मनासर्ववेदेषुगीताइति । ममयोनिरितिगर्भाधानार्थायोनिः।
नतुमाता।वाक्यशेषात् । तथाहिसामवेदेशार्कराक्षश्रुतौ । विष्णोर्योनिर्गर्भसंधारणार्थामहामायासर्वदुःखै
विहीना । तथाप्यात्मानंदुःखिवन्मोहनार्थंप्रकाशयंतीसहविष्णुनासेति । अतःसीतादुःखादिकंसर्वंमृषाप्र

दर्शनमेव। तथाचकूर्मपुराणे। नचेयंभूः। तथाचसौकरायणश्रुतिः। अन्याभूर्भूरियंतस्यच्छायाभूताऽव मासाहिभूतैकयोनिरिति। अवापस्वेच्छयादास्यंजगतांप्रपितामहीत्याद्यनभिम्लानश्रुतिः। मत्स्यपुराणो क्तमपिस्वेच्छयैव। महद्ब्रह्मशब्दवाच्याप्रकृतिरेव। महतीब्रह्मणीद्वेतुप्रकृतिश्चमहेश्वरइतितत्रैव॥३॥ बंधप्रका रंदर्शयतिसाधनानुष्ठानायसत्त्वमित्यादिना॥५॥ तृष्णासंगयोःसमुद्भवं। तयोःकारणं॥७॥ अज्ञानंजायते यतस्तदज्ञानजं। प्रमादमोहौतमसइतिवाक्यशेषात्॥ ८॥ [१६]रजसस्तुफलंदुःखमित्यल्पसुखंदुःखं। तथाहिशा र्कराक्षशाखायां। रजसोह्येवजायतेमात्रयासुखंदुःखंतस्मात्तान्सुखिनइत्याचक्षतइति। अन्यथादुःखस्या तिकष्टत्वात्। तमोधिकत्वंरजसोनस्यात्॥१६॥ परि[१९]णामिकर्तारंगुणेभ्योन्यंनपश्यति। अन्यथायदापश्यः पश्यतेरुक्मवर्णंकर्तारमीशंपुरुषंब्रह्मयोनिमितिश्रुतिविरोधः। नाहंकर्तानकर्तात्वंकर्तायस्तुसदाप्रभुरितिमो क्षधर्मे॥१९॥ [२२]प्रायोनद्वेष्टिनकांक्षति। तथाहिसामवेदेभाल्लवेयशाखायां। रजस्तमःसत्त्वगुणान्प्रवृत्तान्प्रायो नचद्वेष्टिनचापिकांक्षते। तथापिसूक्ष्मंसत्त्वगुणंचकांक्षेद्यदिप्रविष्टंसुतमश्चजह्यादिति। नहिदेवाऋषयश्चस त्त्वस्थानृपसत्तम। हीनाःसत्त्वेनसूक्ष्मेणततोवैकारिकामताः। कथंवैकारिकोगच्छेत्पुरुषःपुरुषोत्तममितिमो

क्षधर्मे । सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितइतिच ॥ २२ ॥ तुल्यत्वार्थउक्तः पुरस्तात् ॥ २४–२५ ॥ ब्रह्म
वत्प्रकृतिवत् भगवत्प्रियत्वंब्रह्मभूयं । नतुतावत्प्रियत्वं । किंतुप्रियत्वमात्रं । बद्धोवापितुमुक्तोवानरमावत्प्रि
योहरेरितिपाद्मे । भूयायभावाय ॥२६॥ ब्रह्मणोमायायाः ॥२७॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविर
चितेगीताभाष्येचतुर्दशोऽध्यायः ॥१४॥

ॐ ॥ संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्यायेदर्शयति ॥ध॥ ऊर्ध्वोविष्णुः । ऊर्ध्वपवित्रोवाजिनीव
स्वमृतमस्मिद्रविण ँसवर्चसमितिहिश्रुतिः । ऊर्ध्वः उत्तमः सर्वतः । अधोनिकृष्टं । शाखाभूतानि । श्वोप्येकप्र
कारेणनतिष्ठतीत्यश्वत्थः । तथापिनप्रवाहव्ययः । पूर्वब्रह्मकालेयथास्थितिस्तथासर्वत्रापीत्यव्ययता ॥ फलकार
णत्वाच्छंदसांपर्णत्वं । नहिकदाप्यजातेपर्णेफलोत्पत्तिः ॥१॥ अव्यक्तेपिसूक्ष्मरूपेणसंतिशरीरादौचभूतानी
त्यधश्चोर्ध्वंचप्रसृताः । गुणैःसत्त्वादिभिः । प्रतीतिमात्रसुखत्वात्प्रवालाःविषयाः । मूलानिभगवद्रूपादीनि । भ
गवानपिकर्मानुबंधेनहिफलंददाति । तथाचभाल्लवेयशाखायां । ब्रह्मवाअस्यपृथङ्मूलंप्रकृतिःसमूलंसत्त्वादयो
र्वाचीनमूलंभूतानिशाखाःछंदांसिपत्राणिदेवनृतिर्यंचश्चशाखाःपत्रेभ्योहिफलंजायतेमात्राःशिफाःमुक्तिः

फलममुक्तिःफलंमोक्षोरसोऽमोक्षोरसःअव्यक्तेचशाखाःव्यक्तेचशाखाःअव्यक्तेचमूलंव्यक्तेचमूलंएषोश्वत्थोगु
णोलोलपत्रोनस्थीयतेननस्थीयतेनह्येषकदाचनान्यथाजायतेनान्यथाजायतइति ॥२॥ यथास्थितस्तथानो
पलभ्यते । अंतादिर्विष्णुः । त्वमादिरंतोजगतोस्यमध्यमितिभागवते । अनाद्यंतंपरंब्रह्मनदेवाऋषयोविदुरि
तिमोक्षधर्मे । असंगशस्त्रेणसंगराहित्यसहितेनज्ञानेन । ज्ञानासिनोपासनयासितेनेतिभागवते । छेदश्चविम
र्शएव । ततश्चतस्यैवाबंधकंभवति । तथाहिमूलस्थंब्रह्मप्रतीयते । तच्चोक्तंतच्छ्रुतावेव विमर्शोह्यस्यछेदःतंनब
ध्नातिबध्नातिचान्यानिति । तदर्थंचतमेवप्रपद्येप्रपद्येत । तच्चोक्तंतत्रैव तंवैप्रपद्येतयंवैप्रपद्यनशोचतिनहृष्य
तिनजायतेनम्रियतेतद्ब्रह्ममूलंतच्छित्त्सुरिति । नारायणेनदृष्टस्तुप्रतिबुद्धोभवेत्पुमानितिमोक्षधर्मे । छेदनो
पायोह्यत्राकांक्षितः। नचभगवतोन्यःशरण्योस्ति॥३॥४॥साधनांतरमाह । निर्मानेति॥५॥स्वरूपंकथयति।
नतदित्यादिना ॥६॥ कर्षतीत्युक्तेजीवस्यस्वातंत्र्यंप्रतीतंतन्निवारयति । शरीरमित्यादिना । यत्यदाशरीर
मवाप्नोतिउत्क्रामतिचजीवस्तदेश्वरःएतानिगृहीत्वासंयाति । यत्रयत्रैवसंयुक्तोधातागर्भंपुनःपुनः । तत्रतत्रै
ववसतिनयत्रस्वयमिच्छतीतिहिमोक्षधर्मे।भावाभावावपिजानन्गरीयोजानामिश्रेयोनतुतत्करोमि । आ

शासुहर्म्यासुहृदासुकुर्वन्यथानियुक्तोस्मितथावहामीतिच।हत्वाजित्वापिमघवन्यःकश्चित्पुरुषायते। अकर्ता त्वेवभवतिकर्तात्वेवकरोतितदितिच। तद्यथानःसुसमाहितमुत्सर्जद्यायादेवमेवायंशारीरआत्माप्राज्ञेनात्म नान्वारूढउत्सर्जंघातीतिचश्रुतिः। वाङ्मनसिसंपद्यतेमनःप्राणेप्राणस्तेजसितेजःपरस्यांदेवतायामितिच । गंधानिवसूक्ष्माणि॥८॥भोगोस्यापिसाधितःपुरस्तात्। इंद्रियद्वाराहिसोपिभुंक्ते। तद्यइमेवीणायांगायंत्येतं तेगायंतीतिचश्रुतिः। गुणान्वितमेवभुंक्ते। नहवैदेवान्पापंगच्छतीतिश्रुतिः ॥९॥ तर्हिकिमितिनदृश्यतइ त्यतआह। उत्क्रामंतमित्यादिना॥१०॥ यतंतोज्ञानंप्राप्य। अकृतात्मानअशुद्धबुद्धयः॥११॥ पूर्वोक्तमेवज्ञानं प्रपंचयति। यदादित्यगतमित्यादिना ॥ १२ ॥ गांभूमिं ॥ १३ ॥ वेदैर्निर्णयात्मिकामीमांसावेदांतः । तथा चसामवेदेप्राचीनशालश्रुतिः। सवेदांतकृत्सकालकइतिसह्येवयुक्तिसूत्रकृत्सकालकइति ॥ १५ ॥ क्षरभूता निब्रह्मादीनि। कूटस्थःप्रकृतिः। तथाचशार्कराक्षश्रुतिः।प्रजापतिप्रमुखाःसर्वजीवाःक्षरोक्षरःपुरुषोवैप्रधा नं। तदुक्तंचान्यमुदाहरंतिजालाजालंमातरिश्वानमेकमिति ॥१६॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्य विरचितेगीताभाष्येपंचदशोऽध्यायः ॥ १५ ॥

॥ ॐ ॥ पुमर्थसाधनविरोधीन्यनेनाध्यायेनदर्शयति ॥ध॥ तपोब्रह्मचर्यादि । ब्रह्मचर्यादिकंतपइत्यभिधानं ॥१॥ पैशुनंपरोपद्रवनिमित्तदोषाणांराजादेःकथनं। परोपद्रवहेतूनांदोषाणांपैशुनंवचः। राजादेस्तुमदाद्धी तेरदृष्टिर्दर्पउच्यतइत्यभिधानं । लौल्यंरागः । रागोलौल्यंतथारक्तिरित्यभिधानात्। अचापलंस्थैर्यं । चप लश्चंचलोऽस्थिरइत्यभिधानात् ॥ २ ॥ क्षमातुक्रोधाभावेनसहापकर्तुरनपकृतिः । अक्रोधदोषकृच्छत्रोःक्षमा वान्सनिगद्यतइत्यभिधानात् ॥३॥ दैवींसंपदमभिजातः। प्रतिजातः ॥५॥ जगतःसत्यंप्रतिष्ठाईश्वरश्चविष्णु स्तद्वैपरीत्येनाहुः। तस्योपनिषत्सत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यमितिहिश्रुतिः। द्वेवावब्रह्मणोरूपे मूर्तंचामूर्तंचस्थितंचसच्चयच्चत्यच्चेति । तस्योपनिषत्सत्यस्यसत्यमिति । एषह्येवैतत्सादयतियामयतिचेती तिप्राचीनशालश्रुतिः । परस्परसंभवोह्युक्तःअन्नाद्भवंतिभूतानीत्यादिना ॥८॥ दुंष्पूरोहिकामः। पाताल इवदुष्पूरोमांहिक्लेशयसेसदेतिहिमोक्षधर्मे ॥१०॥ मांमात्मपरदेहेष्विति। नकस्यचिद्विष्णुःकारयिता यदि स्यान्मामपीदानींकारयत्वित्यादि। ईश्वरोयदिसर्वस्यकारकःकारयीतमां। अद्येतिवादिनंब्रूयात्सदाधोया स्यसीतिहेतिसामवेदेयास्कश्रुतिः ॥१८॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविर०षोडशोऽध्यायः ॥१६॥

॥ ॐ ॥ गुणभेदान्प्रपंचयत्यनेनाध्यायेन ॥०॥ शास्त्रविधिमुत्सृज्यअज्ञात्वैव । वेदःकृत्स्नोधिगंतव्यःसर
हस्योद्विजन्मनेतिविधिरुत्सृष्टोहितैः। येवैवेदंनपठंतेनचार्थंवेदोज्झितांस्तान्विद्धिसानूनबुद्धीनितिमाधुच्छं
दसश्रुतिः । अन्यथातामसाइत्येवोच्येत । नतुविभज्य । यदिसात्त्विकास्तर्हिनोत्सृष्टशास्त्राः। नहिवेदवि
रुद्धोधर्मः । वेदोखिलोधर्ममूलंस्मृतिशीलेचतद्विदामितिहिस्मृतिः । वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययइ
तिचभागवते ॥१॥ अतोविभज्याह । त्रिविधेत्यादिना ॥२॥ सत्त्वानुरूपाचित्तानुरूपा । योयच्छ्रद्धःस
एवसः। सात्त्विकश्रद्धःसात्त्विकइत्यादि । कःसात्त्विकश्रद्धइत्यादिविभज्याह। यजंतइत्यादिना ॥३॥४॥
भगवत्कर्शनंनामाल्पत्वदृष्टिरेव । योवैमहांतंपरमंपुमांसंनैवंद्रष्टाकर्शकःसोतिपापीतिह्यनभिम्लानश्रुतिः ।
आसुरोनिश्चयोयेषांतआसुरनिश्चयाः । देवास्तुसात्त्विकाःप्रोक्तादैत्याराजसतामसाइतिह्याग्निवेश्यश्रुतिः
॥६॥ प्रीतिर्हिरानंतरिका । हृद्यत्वंदर्शने । स्थिराश्चनतदैवपक्वाभवंति । तथाह्याज्यादयः ॥८॥ सौम्यत्वम
क्रौर्यं । अक्रूरःसौम्यउच्यतइत्यभिधानं । मौनंमननशीलत्वं । बाल्यंचपांडित्यंचनिर्विद्याथमुनिरितिहि
श्रुतिः। एतेनहीदंसर्वंमतंयदनेनहीदंसर्वंमतंतस्मान्मुनिस्तस्मान्मुनिरित्याचक्षतइतिभाल्लवेयश्रुतिः। कथं

चान्यथामानसंतपःस्यात् ॥१६॥ पुनश्चकर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह । ओंतत्सदित्यादिना । परस्यब्रह्मणोह्येतानिनामानि । ओंतंजगद्यत्रस्वयंचपूर्णोवेदोक्तरूपोनुपचारतश्च । सर्वैःशुभैश्चापियुतोन चान्यैरोंतत्सदित्येनमथोवदंतीतिह्यृग्वेदखिलेषु । द्वितीयपादस्तच्छब्दार्थः । सदेवसोम्येदमग्रआसीदिति च । ओमितिब्रह्मेतिच । तेनब्रह्मणा । आत्मपूजार्थं । वेदविधिर्व्यंजनं । मातूक्तापुरस्तात् ॥२३॥ तंफ- लंमेस्यादित्यनभिसंधाय ॥२५॥ सद्भावशब्देनप्रजननंसूचितं । ओमित्युक्त्वानभिसंधायफलंयज्ञदानतप आदिकृतामतिप्रीतेर्नामसाम्याद्ब्रह्मैवनिष्पादितंभवतीत्याशयः । तथाचऋग्वेदखिलेषु । ॐयज्ञाद्यानिष्फ लंकर्मतत्स्यात्सद्धैतदर्थंकर्मवदंतिवेदाः । तच्छब्दानांसन्निधेर्ब्रह्मप्रीतेस्तद्रूपत्वाज्जनितंब्रह्मतस्येति ॥ २६ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥

ॐ ॥ पूर्वोक्तंसाधनंसर्वंसंक्षिप्योपसंहरत्यनेनाध्यायेन ॥ ७॥ फलानिच्छयाऽकरणेनवाकाम्यकर्मन्यासः संन्यासः । त्यागस्तुफलत्यागएव । तथाहिप्राचीनशालश्रुतिः । अनिच्छयाऽकर्मणावापिकाम्यन्यासोन्यासः । फलत्यागस्तुत्यागइति ॥२॥ मनीषिणइतिविशेषणात्पूर्वपक्षोपिग्राह्यएव । फलत्यागेनत्यागोविवक्षि

तोयज्ञादेस्तत्पक्षे । यस्तुकर्मफलत्यागीतिचवक्ष्यति । अतएकएवायंपक्षः ॥३॥ तत्प्रकारंचाह । निश्चय मित्यादिना । यज्ञभेदउक्तोद्रव्ययज्ञइत्यादिना । दानेत्वभयदानमंतर्भवति । एतेषांमध्येयत्किंचिद्यज्ञादि कंकर्तव्यमेवेत्यर्थः। अन्यथा । ब्रह्मचारीगृहस्थोवावानप्रस्थोयतिस्तथा । यदीच्छेन्मोक्षमास्थातुमुत्तमाश्र ममाश्रयेदित्यादिव्यासस्मृतिविरोधः । ज्ञानयज्ञविद्याभयदानब्रह्मचर्यादितपसोहिते । अतोयद्वचोन्यथा प्रतीयतेअधिकारिभेदेनतद्योज्यं । अन्यथेतरेषांगत्यभावात् ॥ ४-१० ॥ अन्यस्त्यागार्थोनयुक्तइत्याह । नहीति ॥११॥ त्यागंस्तौति । अनिष्टमिति ॥१२॥ पुनःसंन्यासंप्रपंचयितुंकर्मकारणान्याह । पंचेत्यादि ना । सांख्येकृतांतेज्ञानसिद्धांते ॥१३॥ अधिष्ठानंदेहादिः । कर्ताविष्णुः । सहिसर्वकर्तेत्युक्तं । जीवस्य चाकर्तृत्वेप्रमाणमुक्तं । करणमिंद्रियादि । चेष्टाःक्रियाः। हस्तादिक्रियाभिर्हिहोमादिकर्माणिजायंते । ध्या नादेरपिमानसीचेष्टाकारणं । पूर्वतनीचेष्टापिसंस्कारकारणत्वेनभवति । दैवमदृष्टं । तथाचायास्यश्रुतिः। देहोब्रह्मार्थेंद्रियाद्याःक्रियाश्चतथादृष्टंपंचमंकर्महेत्विति ॥१४॥ केवलंनिष्क्रियं। एनंकेवलमात्मानंनिष्क्रि यत्वाद्वदंतिहीतितत्रैव ॥१६॥ तज्ज्ञानंस्तौति । यस्येति । यस्त्वीषद्बध्यतेसईषदहंकारीच ॥ १७॥ एवंत

र्हिनपुरुषमपेक्ष्यविधिः । अकर्तृत्वादित्यतआह । ज्ञानमिति । त्रिविधाकर्मचोदना । एतत्रिविधमपेक्ष्य कर्मविधिरितित्रिविधेत्युच्यते । कारणानिसंक्षिप्याह । करणमिति । कर्मसंग्रहःकर्मकारणसंक्षेपः। अधि ष्ठानादिकरणएवांतर्भूतं । तथाह्यृग्वेदखिलेषु । ज्ञानंज्ञेयंज्ञानिनंचाप्यपेक्ष्यविधिरुत्थितः । करणंचैवकर्ता चकर्मकारणसंग्रहइति । अकर्तृत्वेपिविधिद्वारेश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैःकर्मद्वारापुरुषार्थोभवती ति । ईश्वराधीनत्वेपिविधिद्वारानियतस्तेनैव । यदिचेच्छादिर्जायतेतर्हिकारितमेवेश्वरेण । फलंचनिय तं । वस्तुतोकर्तृत्वेप्याभिमानिकंकर्तृत्वंतस्यैव । स्वातंत्र्यंचजडमपेक्ष्येतिनप्रवृत्तिविधिवैयर्थ्यं । सर्वंचैत दनुभवोक्तप्रमाणसिद्धमितिनपृथक्प्रमाणमुच्यते ॥१८॥ पुनःसाधनप्रथनायगुणभेदानाह । ज्ञानमित्या दिना । गुणसंख्यानेगुणगणनप्रकरणे ॥१९॥ एकंभावंविष्णुं ॥२०॥ परैरकृतंदोषंदीर्घकालकृतमप्यनुचि तंयःसूचयतिसदीर्घसूत्री । परेणयःकृतोदोषोदीर्घकालकृतोपिवा । यस्तस्यसूचकोदोषाद्दीर्घसूत्रीसउच्य तइत्यभिधानात् ॥२८॥ यथार्थत्वनियमाभावोराजस्याः । अन्यथातामस्याभेदाभावात् ॥३१॥ नैष्कर्म्य सिद्धिं । नैष्कर्म्यफलांयोगसिद्धिं ॥४९॥ यथायेनोपायेनसिद्धिंप्राप्तोब्रह्माप्नोतितथानिबोध। यासिद्धिर्ज्ञा

नस्यपरानिष्ठा ॥५०॥ [53]ब्रह्मभूयायकल्पते । ब्रह्मणिभावोब्रह्मभूयं । ब्रह्मणिस्थितिः । सर्वदातन्मनस्कतेत्य
र्थः ॥५३॥ [56]पुनरंतरंगसाधनान्युक्तोपसंहरति । सर्वकर्माणीत्यादिना ॥५६॥ [61]परोक्षंवचनंतुद्रोणंप्रतिभी
मवचनवत् ॥६१॥ [66]धर्मत्यागःफलत्यागः । कथमन्यथायुद्धविधिः । यस्तुकर्मफलत्यागीसत्यागीत्यभिधीय
तइतिचोक्तं ॥ ६६ ॥ पूर्णादोषमहाविष्णोर्गीतामाश्रित्यलेशतः । निरूपणंकृतंतेनप्रीयतांमेसदाविभुः ॥
इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेगीताभाष्येअष्टादशोऽध्यायः॥१८॥श्रीमद्गीताभाष्यंसंपूर्णं॥

